which means "the image of Buddhas". This expression often recures in this work because in another meditation, to be dealt with later on, buddhabimba is the subject of that mystic realization by which the yogi sees Buddhahood in everything.

The very root of our material existence and material desires, the psycho–physical element which pours energy of life into us and compels us to move and work without any reasonable direction is the *calacitta*. When this natural force is controlled by the yogi's will and directed towards the tranformation of human life into superhuman life, it is designated as *bodhicitta*, the means of Enlightenment. The disciple now actively reproduces in himself that ṣaḍaṅgayoga on which he had long fixed his thought following his Master's teachings. Going through all the normal acts and the natural temptations of the saṃsāric world he steadily maintains his desire for illumination and looks only for transcendency. The everlasting struggle between the attractions of the phenomenic world which is apt to break down all human resistance, and the firmness of the ascetic unremittingly determined to understand and transcend it, is the very pith of the vajrayanic drama.

---

श्रीः

# सेकोद्देशटीका

## नमः कालचक्राय



सर्वावृतिप्रशमनिर्मलबुद्धधर्म-
निर्वेधसौधमभिरुह्य वपुर्द्वयेन ।
तस्मै नमो भगवते यदुपज्ञकानि
विश्वोपकारविधिनाटकनर्तकानि ॥

उद्धृत्य वाक्यसलिलं विमलप्रभादि-
पयोनिधेर्जलमुचेव मयाधिमुक्तम् ।
उद्देशगूढपदपद्धतिपल्वलेऽस्मिन्
तृष्णोपरोधविधये विबुधा भजध्वम् ॥

सुचन्द्र आहेति शीतानद्युत्तरे षण्नवतिकोटिग्रामशम्भलमहाविषयाधिपतिर्देवासुरनागनिर्माणकार्यैः षण्नवतिमहाराजाकुलप्रसुतैर्महारत्नमुकुटबद्धैः कोटिकोटिग्रामाधिपतिभिर्नमस्कृतचरणारविन्दः सर्वसत्त्वभाषान्तरैस्तथागतोक्तधर्माणां संग्राहकत्वेन सर्वतथागतश्रोतृत्वात् षोडशकलावरणप्रहाण्या चन्द्रविमलप्रभात्वाच्च शोभनश्चासौ चन्द्रश्चेति सुचन्द्रो गुह्याधिपतिराढकवतीनिवासी श्रीवज्रपाणिः । तत्र गुह्यं श्रावकप्रत्येकयानयोरुत्तरं वज्रयानं तस्मिन्सङ्गीतिकारकत्वेनाधिपतिः । तथा लोकसंवृत्या गुह्यशब्देन यक्षास्तेषामधिपतिर्गुह्याधिपतिः । बाह्येऽऽढकशब्देन मृतकसमूहः । तद्योगादाढकवती श्मशानभूमिः । तस्यां सदा यक्षाः सत्त्वानां विहेठकाऽनेकविघ्नकर्तारः । तेषां बाधको ऽटव्यां मृगाधिपतिरिवाढकवतीनिवासी महायक्षाधिपतिः । अध्यात्मनि षट्शताधिकैकविंशतिसहस्रश्वासप्रश्वासानां षट्त्रिंशच्चतोनानां निरोधो ऽऽढकः सो ऽस्यास्तीत्याढकवती धर्ममेघभूमी तस्यां निवास्याढकवतीनिवासी मारक्लेशज्ञेयसमापत्त्यावरणयक्षानां बाधको यक्षाधिपतिः । तथागतदेशितधर्मसिंहनादेन सर्व-

सत्त्वानां प्रत्येककृतैर्धर्मप्रवर्तको गुह्याधिपतिः श्रीवज्रपाणिः। तन्निर्माणकायः सुचन्द्रो राजा ऽध्येषयति। तदुक्तं मूलतन्त्रे–

अग्रतः पुर्णिमाचन्द्रे पृष्ठतः पुर्णिमारवौ।
वामतस्तिमिरे वक्त्रः पुच्छे दक्षिणतः स्थितः॥

त्रैलोक्यविजयो नाम समयो मारमर्दनः।
तस्मिन् पूर्वमुखः शास्ता रत्नसिंहासने स्थितः॥

पञ्चरश्मिमयैर्व्यूहैः प्रपूरयञ्जगत्रयम्।
बोधिसत्त्वैर्मरणैश्च देवेन्द्रैः पूजितः प्रभुः॥

दिव्यैर्नानाविधैः पुष्पैर्दिव्यैर्गन्धैर्मनोहरैः।
दिव्यै रत्नप्रदीपैश्च दिव्यैर्धूपैः सुगन्धजैः॥

दिव्यैर्नानाविधैश्चूर्णैर्नैवेद्यैरमृतैः फलैः।
विचित्राभरणैर्दिव्यैर्दिव्यैर्वस्त्रैश्च चामरैः॥

घण्टादर्शपताकाभिर्दिव्यैश्चत्रैर्विघनकैः।
पञ्चाङ्गैर्मौलिसंयुक्तैः प्रणिपत्य पुनः पुनः॥

त्रैलोक्यनायकं बुद्धं बोधिसत्त्वामरादयः।
स्वस्वासने निषण्णास्ते मन्त्रयानश्रुतार्थिनः॥

अभिज्ञालाभिनः केचिद्बोधिसत्त्वाः सुरादयः।
हृष्टतुष्टाशयाः सर्वे मनसा चिन्तयन्ति ते॥

दीपङ्करेण या पूर्वं मन्त्रयानस्य देशना।
कृतास्माकं तु कर्तव्या गौतमेनाद्यसाधुना॥

अथातः शम्भलाख्यातो वज्रपाणिविनिर्मितः।
सुचन्द्रनृप आयातः स्वर्ध्यं श्रीधर्मधातुकम्॥

आदौ प्रदक्षिणं कृत्वा शास्तुः पादाम्बुजद्वयम्।
रत्नपुष्पैः समभ्यर्च्य प्रणिपत्य पुनः पुनः॥

कृताञ्जलिपुटो भुत्वा सम्बुद्धस्याग्रतः स्थितः।
तन्त्रस्याध्येषकः शास्तुश्चन्द्रः सङ्गीतिकारकः॥

सम्यक्शासकत्वेन हे शास्तः। यो वक्ष्यमाण उदकादिसप्तधात्मकः कुम्भादिकस्त्रिधा। अनुत्तर इति परमाक्षरः। तथेति सेकः सि-

च्यते कायादिकं निर्मलं निरावरणं क्रियतेऽनेनेति सेकः। तं कथयस्व मे। लौकिकसिद्धिरित्यकनिष्ठभुवनपर्यन्ताधिपत्यमुत्तरसिद्धिरिति सवासनसर्वक्लेशज्ञेयसमापत्त्यावरणप्रहाणितो द्वादशभूमिप्रतिलम्भेन संयक्सम्बुद्धत्वं तदर्थं संक्षिप्येति। क्लेशकल्पसत्त्वतृष्णायुर्लक्षणपञ्चकषायोपहतजनानुग्रहप्रवृत्तत्वादध्येषकस्य सेकपटले ज्ञानपटले च विस्तरेण वक्ष्यमाणत्वात् भगवानाहेति विशुद्धषड्धातुकत्वादैश्वार्यादिगुणलक्षणो भगो विद्यतेऽस्येति भगवान्। तदुक्तं मूलतन्त्रे–

ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः।
ज्ञानस्यार्थप्रयत्नस्य षण्णां भग इति स्मृतिः॥

षट्त्रिंशत्पृथिव्यादिशुद्धधात्वार्यवज्र्यैश्वर्यादिगुणास्तासां षड्भगास्ते प्रकीर्तिताः। हेवज्रेऽपि–

भञ्जनं भगमाख्यातं क्लेशमारादिभञ्जनात्।
प्रज्ञाबाध्याश्च ते क्लेशास्तस्मात्प्रज्ञा भगोच्यते॥

कुत्रस्थाने। क कस्मिन्मण्डले कुत्र स्थितः। कया परिषदा परिवृतो भगवानाह। श्रीधान्ये नियतमन्त्रनयदेशनास्थाने महासुखवासे वज्रधातुमहामण्डले वज्रसिंहासने स्थितः। बुद्धबोधिसत्त्वक्रोधदेवनागदेवीगणपरिवृतस्त्रैधातुकवन्दितचरणारविन्दः। परमादिबुद्धसमाधिसमापन्नः। कायवाक्चित्तात्मको वंकारो वा तत्रमहासुखावासे। धर्मधातावाकाशलक्षणे परमाक्षरो ऽच्युतक्षणः काल इत्युच्यते। तदेव वज्रज्ञानम्। तस्य कालस्य निरावरणस्कन्धधात्वायतनं चक्रं त्रिभवस्यैकत्वं निरावरणज्ञेयम्। तदेव वज्रधातुमहामण्डलमित्युच्यते। सर्वाकारं सर्वेन्द्रियं बिन्दुरूपं विश्वमायाधरं भगवतः शरीरं। प्रज्ञोपायात्मकमिति। अप्रमाणाभेद्यचन्द्रसूर्याग्निनां मण्डललक्षण एकारलक्षणे वा वज्रसिंहासने स्थितः।

उक्तं च मूलतन्त्रे–

गृध्रकूटे यथाशास्तः प्रज्ञापारमितानये।
तथा मन्त्रनये प्रोक्ता श्रीधान्ये धर्मदेशना॥

---

1. *apramāṇābhedya*° restored after Tib.

कुतः स्थानात्कुतः शास्त्रात्तत्र तन्त्रश्च देशितः ।
कस्मिन्स्थाने कया लोकपरिषदा केन हेतुना ॥

गृध्रकूटे महाशैले प्रज्ञापारमितानयम् ।
सन्देश्य बोधिसत्त्वानां महायानं निरुत्तरम् ॥

अथ कस्यां महाचैत्यां धर्मधातुकमण्डले ।
बोधिसत्त्वादिभिः सार्धं विजहार तथागतः ॥

आकाशे त्वजडे स्वच्छे ऽनवकाशप्रकाशिनि ।
विश्वे वज्रालये लयने धर्मधातौ मनोरमे ॥

तन्त्रस्य देशना पुंसां पुण्यज्ञानप्रयोजनम् ।
एकारो गगनालोको धर्मधातुः प्रकीर्तितः ॥

वंकारः सुगतव्यूह एकारे संयग्विष्ठितः ।

इति । पुनस्तत्रैव—

एरहस्याख्यधातौ वा भगे धर्मोदयेऽम्बुजे ।
सिंहासने स्थितो वज्री उक्तस्तन्त्रान्तरे मया ॥

वंवज्री वज्रसत्त्वश्च वज्रभैरव ईश्वरः ।
हेरुकः कालचक्रश्च अदिबुद्धादिनामतः ॥

नानाविषयसञ्ज्ञाभिः स्थानमाधारलक्षणम् ।
आधेयश्च मया प्रोक्तो नानासत्त्वाशयेन तु ॥

सर्वज्ञो वज्रधृक् शास्ता बुद्धः सिंहासने स्थितः ।
देशकः कालचक्रस्य सुचन्द्राध्येषितस्त्वया ॥

इति । शृणु सुचन्द्रेत्याद्युद्देशसमाप्तिः । यावद्भगवतः प्रतिवचनं सेकार्थमिति । सेकं तत्प्रयोजनं च परमिति परमाक्षरं परमार्थसुखोपायत्वादनधीष्टमपि नाडीसञ्चारादिकमाह नाडीसञ्चारमित्यादि । ऊर्ध्वाधो ललनादिषण्णाडीषु वक्ष्यमाणक्रमेण प्राणापानवायोः । सङ्क्रमणमायाम इति । यम उपरम इत्यस्य धातोः । आसमन्ताद्यमनमायामः । प्राणापानवायोर्मध्यनाड्यां प्रवेशः । उभयगतिनिबोधादिति । उद्देशात्संक्षेपादिति । सर्वस्मिन्नेव योगियोगिन्यादितन्त्र उद्देशस्त्रिविधः । निर्देशोऽपि । तत्रोद्देशः स्वनाम्नैव कथितः । प्रत्युद्देशो द्वितीयः । महो-

देशस्तृतीयः। एवं निर्देशोऽपि स्वनाम्नैव व्याख्यातः। प्रतिनिर्देशो द्वितीयः। अपर इति महानिर्देशस्तृतीयः। उद्देशनिर्देशौ द्वावेव तन्त्रसङ्गीतिः। तत्रोद्देशनसङ्गीतिः समस्तलघुतन्त्रम्। यथा ऽष्टादशशतग्रन्थश्रीसमाजादिका निर्देशेन सङ्गीतिः सकलमूलतन्त्रराजदेशना। यथा पञ्चविंशतिसहस्रश्रीसमाजादिका। एवं प्रत्युद्देशेन लघुतन्त्रे पञ्जिका। इह निर्देशः प्रतिनिर्देशो ऽभिमतः। तेन मूलतन्त्रे पञ्जिका। तथा महोद्देशेन लघुतन्त्रे टीका। इह निर्देशो महानिर्देशो ऽभिमतः। महानिर्देशेन मूलतन्त्रे टीका सा पुनः सङ्गीतिः पञ्जिका टीका च तिस्रोऽपि। अभिज्ञालभिभिरिति दिव्यचक्षुर्दिव्यश्रोत्रपरचित्तज्ञानस्वपर पूर्वनिवासानुस्मृत्याकाशगमनर्द्धिलब्धैरेवं कर्तव्या न पण्डितैरिति शुष्कतर्काभ्यासोपहतचित्तसन्ततिभिः। प्रत्यात्मवेदनीयाध्यात्माध्ययनविमुखैः। एषामित्युक्तक्रमेण षट्कोटिभिः षड्विधैरुद्देशादिभिः शुद्धं परिशुद्धमिदमादिबुद्धतन्त्रं कालचक्राभिधानकं स्यादिति वक्ष्यमाणेन सम्बन्धः। एवं वज्रयोगैश्चतुर्विधैः शुद्धमिति सर्वत्र सम्बध्यते। विशुद्धधर्ममन्त्रसंस्थानात्मकैर्वज्रयोगैः। शून्यताऽनिमित्ताप्रणिहितानभिसंस्कारविमोक्षणकरुणामैत्रीमुदितोपेक्षा ब्रह्मविहारैः। सहक्रमात्समरसीभवरूपैः। दुर्वाररागमलावलिप्तोभयेन्द्रियात्मकतुर्यातमो ऽभिभूतसुषुप्तप्राणोत्पादितसदसत्स्वप्नानेकविकल्पभावससंज्ञात्मकजाग्रदवस्थाध्वंसकैः। सहजधर्मसम्भोगनिर्माणकायरूपैः। तत्र स्वभावाभावतः शून्यं तस्य शून्यस्य भावः शून्यता। इहातीतानागतं ज्ञेयं शून्यं तस्य दर्शनं भावः शून्यता गम्भीरोदारा। अतीतानागताभावाद्गम्भीरा। अतीतानागतदर्शनादुदारा। तयोपलक्षितं तद्ग्राहकं वा ज्ञानं शून्यताविमोक्षः। तेन विशुद्धं तुर्यावस्थाक्षयादक्षरं महासुखम्। कं सुखं तद्गुणद्धीति करुणालक्षणं ज्ञानवज्रम्। स एव सहजकायः प्रज्ञोपायात्मको विशुद्धो योग इत्युच्यते। निमित्तं बुद्धो बोधिरित्यादि विकल्पचित्तं हेतुः। शून्यत्वादेव हेत्वभावः। ततो न विद्यते निमित्तं यस्य तदनिमित्तं ज्ञानमनिमित्तविमोक्षः। तेन विशुद्धं सुषुप्तक्षयान्नित्यानित्यादिद्वयरहितं मैत्र्यात्मकं कायद्वयस्फरणैर्जगदर्थकारिनिर्विकल्पात्मकं चित्तं चित्तवज्रं स एव धर्मकायः। प्रज्ञोपायात्मको धर्मात्मा योग इत्युच्यते। अनिमित्तादेव तर्काभावः। अतर्कादप्रणिहितम्। प्रणिधानं

सम्बुद्धो ऽहं भवामीत्यादिकं न विद्यते यस्य तदप्रणिहितविमोक्षः। तेन विशुद्धः स्वप्नक्षयादक्षयोऽनाहतो ध्वनिः। सर्वसत्त्वरुतात्मको मन्त्रमुदितालक्षणः। सर्वसत्त्वरुतैः सर्वसत्त्वानां मोदनान्मनसस्त्राणभूतत्वाच्च मन्त्रो वाग्वज्रं स एव सम्भोगकायः। प्रज्ञोपायात्मको मन्त्रयोग इत्युच्यते। प्रणिधानाभावान्न विद्यतेऽभिसंस्कारः सितरक्तप्राणायामविज्ञानलक्षणो यस्यासावनभिसंस्कारविमोक्षः। तेन विशुद्धो जाग्रदवस्थाक्षयात्स्फरितानन्तानन्तनिर्माणकायैः क्लेशप्रतिपक्षमार्गोपनायको रौद्रसरागशान्तादिरूपैरसङ्कीर्ण उपेक्षात्मकः कायवज्रः। स एव निर्माणकायः प्रज्ञोपायात्मकः संस्थानयोग इति। तदुक्तं विमलप्रभायां प्रथमश्लोकव्याख्यने। स एव सहजकायः शून्यताविमोक्षविशुद्धो ज्ञानवज्रः सर्वज्ञः प्रज्ञोपायात्मकः शुद्धयोग इति। स एव धर्मकायो ऽनिमित्तविमोक्षविशुद्धचित्तवज्रं ज्ञानकायः प्रज्ञोपायात्मको धर्मात्मको योग इत्युक्तः। स एव सम्भोगकायो ऽप्रणिहितविमोक्षविशुद्धं वाग्वज्रं दिनकरवपुः प्रज्ञोपायत्मको मन्त्रयोग इत्युक्तः। स एव निर्माणकायो ऽनभिसंस्कारविमोक्षविशुद्धं कायवज्रं पद्मपत्रायताक्षः प्रज्ञोपायात्मकः संस्थानयोग इति ॥

चतुःसम्बोधिभिरिति। एकक्षणपञ्चाकारविंशत्याकारमायाजालाभिसम्बोधिलक्षणैः। तत्र गर्भजोत्पत्तिक्रमेण मातापित्रोरुभयबिन्दुसमरसीभूतस्य मातृगुह्यचक्र उत्पित्सोरालयविज्ञानस्य यैकक्षणं केवलसुखसंवित्तिः। कायश्च रोहितमत्स्यवदेकाकारः सैकक्षणाभिसम्बोधिर्यदा तु गर्भगतस्यैव रूपादिवासनात्मकपञ्चज्ञानसंवित्तिः कूर्मवद्विनिहृतपञ्चस्फोटकाकारस्तदा पञ्चाकाराभिसम्बोधिः। ततः प्रतिस्वं पञ्चज्ञानानां यदा पृथिव्यादिचतुर्धातुवासनाभेदः कायोऽपि विंशत्यङ्गुरीपरिपूर्णस्तदा विंशत्याकाराभिसम्बोधिः। ततो गर्भाद्विनिहृतो मायाजालवदनन्तभावसंवित्तिर्मायाजालाभिसम्बोधिः। एतद्वैधर्म्येण शुद्धज्ञानविज्ञानात्मको ऽच्युतो बिन्दुः स्वभाविककायज्ञानवज्रयोगो वज्रसत्त्वः सर्वार्थदर्श्येकक्षणाभिसम्बुद्धत्वादेकक्षणाभिसम्बोधिः। इह षट्शताधिकैकविंशतिसहस्रश्वासपरिपूरिलक्षणश्वासचक्रक्षयात्। मूलतन्त्रेऽपि–

जन्मस्थानं जिनेन्द्राणामेकस्मिन्समयेऽक्षरे ।
महाप्राणे स्थिते चित्ते प्राणवाते क्षयं गते ॥
दिव्येन्द्रियसमुद्भूते नष्टे मांसेन्द्रियगणे ।
प्रकृतायतने नष्टे दिव्यायतनदर्शने ॥
सर्वं पश्यामि राजेन्द्र अदृष्टं नास्ति मे सदा ॥

इति । स एव धर्मकायश्चित्तवज्रयोगो महासत्त्वः परमाक्षरसुखः पञ्चाकाराभिसम्बुद्धत्वात्पञ्चाकाराभिसम्बोधिः । इहादर्शादिपञ्चज्ञानलक्षणा पृथिव्यादिधातुरूपादिपञ्चस्कन्धप्रज्ञोपायात्मका पञ्चमण्डलनिरोधस्वभावत्वात् । स एव सम्भोगकायवाग्वज्रयोगो बोधिसत्त्वो द्वादशाकारसत्यार्थो बोधिसत्त्वानुग्राहकः । सर्वसत्त्वरुतैर्धर्मदेशको विंशत्याकाराभिसम्बुद्धत्वाद्विंशत्याकाराभिसम्बोधिः । इह पञ्चेन्द्रियपञ्चविषयपञ्चकर्मेन्द्रियपञ्चकर्मेन्द्रियक्रियानिरावरणलक्षणद्वादशसङ्क्रान्तिनिरोधसद्भावाद्विज्ञेया । स एव निर्माणकायः कायवज्रयोगः समयसत्त्वः षोडशाकारतत्त्ववेदनेनाद्यनुग्राहको ऽनन्तमायाजालैः स्फरितकायो मायाजालाभिसम्बुद्धत्वान्मायाजालाभिसम्बोधिः । इह युगपदनन्तापर्यन्तनानामायानिर्माणलक्षणा षोडशकायानन्दादिबिन्दुनिरोधाद्विज्ञालब्धेति । उत्पन्नक्रमेण तु धूमादिदशनिमित्तानां मृदुमध्याधिमात्राधिमात्राधिमात्रभेदेन चतस्रः प्रतिपत्तयः स्कन्धै रूपसञ्ज्ञावेदना संस्कारविज्ञानज्ञानलक्षणैः । धातुभिः पृथिवीतोयतेजोवाय्वाकाशज्ञानैः। आयतनैः कायजिह्वाचक्षुर्घ्राणश्रोत्रमनोगन्धरूपरसस्पर्शशब्दधर्मधातुभिः । बहुवचनात्पायुपादपाणिवागुपस्थशङ्खिनीरित्युत्सर्गगत्यादानालापमूत्रस्रावशुक्रच्युतिभिः । एभिर्वैरोचनादिविशुद्धैः प्रत्येकं षट्कुलैः । लोकधात्वध्यात्माभिषेकसाधनज्ञानाख्यैः पञ्चपटलैर्भाजनलोकसत्त्वलोकसत्त्वशोधनलौकिकसिद्धिसाधनपरमाक्षरज्ञानार्थप्रकाशकैः सत्याभ्यां लौकिकलोकोत्तराभ्याम् । आदिशब्दो ऽनादिनिधानार्थः । अविपरीतान्सर्वधर्मान् बुद्धवानिति बुद्धः । आदिश्चासौ बुद्धश्चादिबुद्धः । उत्पादव्ययरहितः । सर्वज्ञ इत्यर्थः । नामसङ्गीतौ च–

अनादिनिधनो बुद्ध आदिबुद्धो निरन्वयः ॥

इति ।

करुणाशून्यतामूर्तिः कालः संवृतिरूपिणी ।
शून्यताचक्रमित्युक्तं कालचक्रोऽद्वयोऽक्षरः ॥

एकैकाक्षरसञ्ज्ञया वा ।

काकारात्कारणे शान्ते लकाराल्लयोऽत्र वै ।
चकाराच्चलचित्तस्य क्रकारात्क्रमबन्धनैः ॥

अस्यायमर्थः । कारणं बोधिचित्तकाय इत्युक्तं शान्तं जाग्रदवस्थाक्षयेण विकल्परहितं कायबिन्दुनिरोधाल्ललाटे निर्माणकायः । एवं सति स्वप्नावस्थाक्षयात्मकः प्राणस्य लयो वाग्बिन्दुनिरोधात्कण्ठे सम्भोगकायः । जाग्रत्स्वप्नावस्थायां शब्दादिविषयान्विचरच्चलं च्युतिधर्मकं तमोऽभिभूतं चित्तमष्टादशधातुविकारापन्नम् ॥ तस्य बन्धस्तमोऽपगमः । सुषुप्तक्षयश्चित्तबिन्दुनिरोधाद्धृदये धर्मकायः । कुत एतदाह । क्रकारादितिक्रमः कायादिबिन्दूनां च्यवनं तस्य बन्धः सहजसुखेन तुर्यावस्थाक्षयः । स्वरगतज्ञानबिन्दुनिरोधान्नाभौ सहजकाय इति चतुःकायात्मकः । स एव कालचक्रो भगवान् प्रज्ञोपायात्मको ज्ञानज्ञेयसम्बन्धेनोक्तो यथाक्षरसुखज्ञानं सर्वावरणक्षयहेतुभूतं काल इत्युक्तम् । उपायः करुणात्मकः षडभिज्ञात्मा ॥ ज्ञेयाकारं जगच्चक्रं ज्ञेयं त्रैधातुकमनन्तभावलक्षणं चक्रम् । तदेव प्रज्ञा शून्यात्मिका सर्वाकारात्मिकाऽनयोरेकत्वं कालचक्रमित्युक्तं श्रीकालचक्रेऽपि ॥ बुद्धक्षेत्राण्यनन्तान्यपरिमितगुणा धातवश्चाम्बराद्याः स्थित्युत्पत्तिविनाशस्त्रिविध इह भवः षड्गतौ सर्वसत्त्वा । बुद्धाः क्रोधाः सुराद्याः सकरुणकृपा बोधिसत्त्वाः सभार्या एतच्चक्रं जिनस्य त्रिभुवनमपि तस्यैकमेकस्य शम्भोरिति । आदावित्यादिश्लोकद्वयं स्पष्टम् । इदानीं सप्तसेकानुद्दिशत्युदकमित्यादिना । इहाश्रुततन्त्रत्वादव्युत्पन्नधियामादिकर्मिकाणां व्युत्पादनाय श्रीतन्त्राद्विमलप्रभायाश्च सप्तसेकादिविधाङ्किञ्चिदवतार्यते । तत्र तावत्प्रथमं शिष्यरक्षाविधिरुच्यते ।

कृत्वा शिष्यस्य रक्षां शिरसि हृदि तथोष्णीषनाभौ च कण्ठे
श्रीगुह्याब्जे जिनाद्यैरभयकुलगतैः कायवाक्चित्तवज्रैः ।
एवं लेपादिकानां प्रकटितनियतैः श्रीस्वरैः पुस्तकानां
सत्त्वानां मोक्षहेतोरमुकमपि विभोर्मण्डलं वर्तयामि ॥

इह प्रथमं शिष्यादे रक्षां कृत्वा पश्चात्संग्रहेच्छिष्यादिकमत्र जिनाद्यैर्देवतीभिरुभयकुलगतैं रक्षां शिरसि ऊकारं हृदये ईकारं। उष्णीषे आकारं नाभौ औकारं कण्ठे ॠकारं गुह्ये अःकारमिति। उभयकुलगतैः कायवाक्चित्तैर्भिन्नैरिति। एवं लेपादिकानां प्रकटितनियतैः श्रीस्वरैरिति। अ इ ऋ उ ए इति पुस्तकानां रक्षां कृत्वा ततो बुद्धानध्येषयेत्। सत्त्वानां मोक्षहेतोरमुकमपि कालचक्र भगवतो मण्डलं लेखयामि तस्मद्बुद्धबोधिसत्त्वा ऽधिष्ठानं शिष्यादीनां कुर्वन्तीति। अध्येषणानियमो रक्षानियमः। इदानीं कलशा उच्यन्ते। एवं स्फाटिक्यकुम्भा वररजतमयाः श्रीकपालायसश्च ताम्राख्या हेमकुम्भाः प्रकटितनियता दारुजा मृन्मयाश्च ॥

शान्तिके स्फाटिकाः कलशाः पुष्टौ रौप्या मारणे मनुष्यकपालान्युच्चाटने विद्वेष आयसा वश्ये सौवर्णाः। आकृष्टौ ताम्राः स्तम्भने मृन्मया मोहने दारुजा दशकलशाः ॥

अथ शान्तिपुष्ट्यर्थं घटलक्षणमुच्यते।

वृत्ता द्व्यष्टाङ्गुलोक्ता द्विगुणितदशकेनोच्छ्रिता द्व्यङ्गुलोष्ठाः।

षड्ग्रीवा ऽष्टाङ्गुलास्याः शशधरधवलाः शान्तिपुष्ट्योर्न चान्ये ॥

इह कलशा गर्भे वृत्तेन द्व्यष्टाङ्गुलोक्ताः। द्विगुणितदशकेनोच्छ्रिता इत्यधः कलशगर्भान्मुखोष्ठान्ता विंशत्यङ्गुला उच्छ्रयेणेति। द्व्यङ्गुलोष्ठा इति द्व्यङ्गुलावौष्ठौ मानौ येषाम्। ते द्व्यङ्गुलोष्ठा मुखादवधेः। षडङ्गुलग्रीवा ऽष्ठाङ्गुलास्याः। ओष्ठादोष्ठान्तं मुखाष्ठाङ्गुल भागत्रयं कृत्वा भागद्वयेन कण्ठरन्ध्रं भागैकेनोष्ठद्वयायां यामः। ते च शशधरधवलाः शान्तिपुष्ट्योर्न चान्ये घटाः स्युरिति। स्फाटिक्यरौप्यघटानामभावे मृन्मया कालाऽमूलकलशाः शालिपिष्टकेन चन्दनेन वा ऽऽलिप्य धवलाः कर्तव्यास्तथा मूलतन्त्रेऽपि भगवतोक्तम्। मारणे नरकपालानि श्मशानाङ्गारचूर्णेन नरवसया ऽलिप्य कृष्णानि कारयेदिति। उच्चाटने विद्वेषे दीर्घग्रीवाऽष्टाङ्गुला वक्राः कृशाङ्गवृत्तेन द्वादशाङ्गुलाः। उच्छ्रयेण चतुर्विंशत्यङ्गुला ऽङ्गुलैकोष्ठाः षडङ्गुलास्या इति। वश्या कर्षणे तु यथा शिल्पिना घटिता लोकव्यवहरणेति। स्तम्भने खर्वा वृत्तोच्छ्रयेण तुल्याः। षोडशाङ्गुलाश्चतुरङ्गुलग्रीवाः षडङ्गुलास्याः। स्थूलोष्ठा-

ऽङ्गुलद्वयेनेति। सर्वकर्मणि शान्त्यादिवश्यादिकर्मण्युक्ता ग्राह्या इति कलशनियमः ॥

ततो वज्रकलशानधिवासयेत्। तत्र मन्त्रपदानि ओं हं हां हिं हीं हृं हॄं हुं हूं ह्लृं ह्लॄं वज्रपद्मामृतघटसुविशुद्धधर्मधातुस्वभावसर्वधर्मान्सुविशुद्धधर्मधातुस्वभावाङ्कुरु कुरु स्वाहा ॥ मण्डलमध्ये विजयकलशं स्थापयेद्गन्धादिकं दत्त्वेति घटाधिवासनम् ॥ ततः शिष्याधिवासनम्। आदौ मण्डलाध्येषणकाले मध्ये भूम्यादिसङ्ग्रहे ऽन्ते मण्डलप्रवेशकाले च सर्वत्र मण्डलं कृत्वा दन्तकाष्ठं दत्त्वा ततो रक्षां करोति तत्रैष विधिः ॥ स्नातस्य धौतवस्त्रस्य शान्त्यादिकर्मानुसारेण तस्यामेव भूम्यां मण्डलं कृत्वोदुम्बरं दन्तकाष्ठं द्वादशाङ्गुलमन्यक्षीरवृक्षजं वा शिरसि पुष्पमालां बध्वा गन्धादिभिरर्चयित्वा पूर्वाभिमुखस्य देयमनेन मन्त्रेण। ओं आः हूं हो हं क्षः वज्रदन्तकाष्ठ चतुर्विमोक्षचतुर्विशुद्धस्वभावकायवाक्चित्तज्ञानसुखं दन्तादिमलं विशोधय विशोधय स्वाहेति दन्तकाष्ठं दत्त्वा ऽन्याधिवासन उर्ध्वतः क्षिप्तं मण्डले पतितं दन्तकाष्ठं लक्षयेत्। यत्र पतति तेन शिरसा तत्रस्थं कर्मप्रसरादिकं तस्य सिध्यतीति दन्तकाष्ठविधिः ॥

ततो मण्डलं भूमौ शिष्यं प्रवेश्य शिरसि कण्ठे हृदि नाभावुष्णीषे गुह्ये ओं आः हूं होः हं क्षः षट्कुलैन्यासं कृत्वा वज्रसत्त्वं प्रचोदयेदेभिर्मन्त्रपदैः। ओं अ आ अं अः वज्रसत्त्व महासुख वज्रकालचक्र शिष्यस्याभिमुखो भव सन्तुष्टो भव वरदो भव कायवाक्चित्ताधिष्ठानं कुरु कुरु स्वाहा। इति शिष्याधिवासनविधिः। इदानीं देवतार्चनमुच्यते। रत्नैर्हैमेन्द्रपुष्पैर्वज्रविविधपटैर्गन्धधूपप्रदीपैर्घण्टादर्शैर्वितानैर्विविधफलपताकादिभिर्नृत्यवाद्यैः। कृत्वा पूजां विचित्रामपरदशविधां चात्मशक्त्या यथोक्तामाचार्यस्यांघ्रिमूले ददाति वरसुतो दक्षिणां शुद्धिहेतोः ॥ इह पूर्वोक्तविधानेन देवतावलम्बनं कृत्वा ततो ज्ञानचक्रं समयचक्रेण सहैकीकृत्यार्घादिकं दत्त्वा पूर्वमन्त्रपदैः। ततोऽर्चनार्थं प्रथमं गन्धचन्दनादिकं गृहीत्वा ऽङ्गुष्ठानामिकाभ्यां बाह्ये कृतमण्डले नायकादीनर्चयेत्। सर्वेषां नामपूर्वप्रणवं देयमर्चने सर्व-

कर्मणि नमो ऽन्ते नाम्नि भवति प्रत्येककर्मणि पुष्ट्यादौ स्वाहा ऽन्ततो वेदितव्य इति । इति सर्वकर्मण्यर्चनीयदेवतानां मन्त्रपदानि तद्यथा मूलतन्त्रे । ओं बुद्धाय नमः । ओं धर्माय नमः । ओं सङ्घाय नमः । ओं वज्रसत्त्वाय नमः । ओं प्रज्ञापारमितायै नमः । ओं स्वभाविककायाय नमः । ओं धर्मकायाय नमः । ओं सम्भोगकायाय नमः । ओं निर्माणकायाय नमः । ओं ज्ञानवज्राय नमः । ओं चित्तवज्राय नमः । ओं वाग्वज्राय नमः । ओं कायवज्राय नमः । ओं चतुर्विमोक्षेभ्यो नमः । ओं चतुर्ब्रह्मविहारेभ्यो नमः । ओं सप्तत्रिंशद्बोधिपक्षिकधर्मेभ्यो नमः । ओं चतुरशीतिसहस्रधर्मस्कन्धेभ्यो नमः । ओं सर्वधर्मदेशकेभ्यो नमः । ओं रत्नत्रयाय नमः । ओं शाक्यमुनये नमः । ओं कालचक्राय नमः । ओं दानपारमितायै नमः । ओं शीलपारमितायै नमः । ओं क्षान्तिपारमितायै नमः । ओं वीर्यपारमितायै नमः । ओं ध्यानपारमितायै नमः । ओं प्रज्ञापारमितायै नमः । ओं उपायपारमितायै नमः । ओं प्रणिधानपारमितायै नमः । ओं बलपारमितायै नमः । ओं ज्ञानपारमितायै नमः । ओं जयघटेभ्यो नमः । ओं विजयघटेभ्यो नमः । ओं सर्वधर्मचिह्नेभ्यो नमः । ओं सर्वसुत्राभ्यो नमः । ओं चिन्तामणये नमः । ओं धर्मघण्टायै नमः । ओं धर्मशङ्खाय नमः । ओं कल्पवृक्षाय नमः । ओं अक्षोभ्याय नमः । ओं अमोघसिद्धये नमः । ओं रत्नसम्भवाय नमः । ओं अमिताभाय नमः । ओं वैरोचनाय नमः । ओं लोचनायै नमः । ओं मामक्यै नमः । ओं पाण्डरायै नमः । ओं तारायै नमः । ओं वज्रधात्वीश्वर्यै नमः । ओं वज्रपाणये नमः । ओं खगर्भाय नमः । ओं क्षितिगर्भाय नमः । ओं लोकेश्वराय नमः । ओं सर्वनिवरणविष्कम्भिने नमः । ओं समन्तभद्राय नमः । ओं गन्धवज्रायै नमः । ओं रूपवज्रायै-नमः । ओं रसवज्रायै नमः । ओं स्पर्शवज्रायै नमः । ओं शब्दवज्रायै नमः । ओं धर्मधातुवज्रायै नमः । ओं उष्णीषाय नमः । ओं विघ्नान्तकाय नमः । ओं प्रज्ञान्तकाय नमः । ओं पद्मान्तकाय नमः । ओं यमान्तकाय नमः । ओं जम्भिन्यै नमः । ओं मानिन्यै नमः । ओं स्तोभिन्यै नमः । ओं अतिवीर्यायै नमः । ओं अतिनीलायै नमः । ओं सर्वधारिणीभ्यो नमः । ओं षडङ्गाय नमः । इति चित्तमण्डले ऽर्चनविधिः । ततो वाङ्मण्डले तद्यथा । ओं वज्रचर्चिकायै

नमः । ओं वज्रवाराह्यै नमः । ओं वज्रमहेश्वर्यै नमः । ओं वज्रैन्द्र्यै नमः । ओं वज्रब्राह्मण्यै नमः । ओं वज्रमहालक्ष्म्यै नमः । ओं वज्रकौमार्यै नमः । ओं वज्रवैष्णव्यै नमः । ओं अष्टाष्टके चतुःषष्टिवज्रयोगिनीभ्यो नमः । ओं षट्त्रिंशदिच्छाभ्यो नमः । इति वाङ्मण्डलेऽर्चनविधिः । ततः कायमण्डले तद्यथा । ओं वज्रविष्णवे नमः । ओं वज्रनैर्ऋत्याय नमः । ओं वज्राग्नये नमः । ओं वज्रोदयये नमः । ओं वज्रेन्द्राय नमः । ओं वज्रेश्वराय नमः । ओं वज्रब्रह्मणे नमः । ओं वज्रविनायकाय नमः । ओं वज्रकर्तिकेयाय नमः । ओं वज्रवायवे नमः । ओं वज्रयामाय नमः । ओं वज्रयक्षेभ्यो नमः । ओं वज्रवारुण्यै नमः । ओं वज्रवायव्यै नमः । ओं वज्रयामिन्यै नमः । ओं यक्षिण्यै नमः । ओं महाबलाय नमः । ओं अचलाय नमः । ओं टक्किराजाय नमः । ओं नीलदण्डाय नमः । ओं शुम्भराजाय नमः । ओं रौद्राक्ष्यै नमः । ओं वज्रशृंखलायै नमः । ओं चुन्दायै नमः । ओं भृकुट्यै नमः । ओं मारीच्यै नमः । ओं प्रत्येकमासभेदेन षष्ट्युत्तरत्रिशतवज्रतिथिदेवीभ्यो नमः । ओं षट्त्रिंशत्प्रतीच्छाभ्यो नमः । ओं वज्रजयाय नमः । ओं वज्रकर्कोटकाय नमः । ओं वज्रवासुकये नमः । ओं वज्रानन्ताय नमः । ओं वज्रतक्षकाय नमः । ओं वज्रमहापद्माय नमः । ओं वज्रकुलिकाय नमः । ओं वज्रशृंखपालाय नमः । ओं वज्रपद्माय नमः । ओं वज्रविजयाय नमः । इति कायमण्डले । ततः श्मशानेषु तद्यथा । ओं श्वानास्यायै नमः । ओं सूकरास्यायै नमः । ओं व्याघ्रास्यायै नमः । ओं जम्बुकास्यायै नमः । ओं गरुडास्यायै नमः । ओं भल्लूकास्यायै नमः । ओं गृध्रास्यायै नमः । ओं काकास्यायै नमः । ओं सर्वभूतेभ्यो नमः । इत्यष्टश्मशानेषु । ततो बाह्यलोकदेवतानाम् । ओं वज्रचन्द्राय नमः । ओं वज्रसूर्याय नमः । ओं वज्रमङ्गलाय नमः । ओं वज्रबुधाय नमः । ओं वज्रबृहस्पतये नमः । ओं वज्रशुक्राय नमः । ओं वज्रशनैश्चराय नमः । ओं वज्रकेतवे नमः । ओं वज्रराहवे नमः । ओं वज्रकालाग्नये नमः । ओं वज्रध्रुवाय नमः । ओं वज्रागस्त्याय नमः । ओं सर्वनक्षत्रेभ्यो नमः । ओं वज्रद्वादशराशिभ्यो नमः । ओं षोडशकलाभ्यो नमः । ओं दशदिक्पालेभ्यो नमः । ओं वज्रनान्दिकेश्वराय नमः । ओं वज्रमहाकालाय नमः । ओं वज्रघण्टकर्णाय नमः । ओं वज्रभृङ्गिने नमः । ओं सर्वक्षेत्रपालेभ्यो नमः । ओं सर्वदूतीभ्यो नमः । ओं हारीत्यै नमः । ओं सर्वसिद्धिभ्यो नमः । ओं

धर्मचक्राय नमः। ओं भद्रघटाय नमः। ओं दुन्दुभ्यै नमः। ओं बोधिवृक्षाय नमः। ओं गुरुबुद्धबोधिसत्त्वेभ्यो नमः। इत्यर्चनविधिः। ततो रत्नेन्द्रनीलादिभिर्हेमपुष्पैर्बहुविधघटैः पञ्चवर्णैर्वस्त्रैर्गन्धधूपप्रदीपैर्घण्टादर्शैर्वितानैर्विविधफलैः पञ्चवर्णपताकाभिर्नृत्यैर्वाद्यैः पूजां कृत्वापि दशविधामिति तन्त्रोक्ताम्। एव शिष्यो यथात्मशक्त्या यथोक्तपूजां कृत्वा तत आचार्यस्यांघ्रिमूले मण्डलं कृत्वा ददाति वरसुतो दक्षिणां शुद्धिहेतोः ॥

द्रव्यात्मानं त्रिशुद्ध्या ससुतदुहितरं कन्यकां गोत्रजान्याम्
अद्यैवाहं जिनानां शरणमधिगतो रौद्रसंसारभीतः।
युष्मत्पादाब्जयोर्वै भवभयहरयोः कायवाक्चित्तशुद्ध्या
इत्यध्येष्यो गुरुः स्यात्सकनककुसुमैर्मण्डलं कारयित्वा ॥

द्रव्यात्मानं त्रिशुद्ध्या। कायवाक्चित्तशुद्ध्या ससुतदुहितरं ददाति कन्यकां गोत्रजान्यां यदि स्वकीया नास्ति। एवं दक्षिणां दत्त्वा ततोऽध्येषणां करोति प्रणिधानं च।

अद्यैवाहं जिनानां शरणमधिगत आबोधसीम्नः
युष्मत्पादाब्जयोर्वै भवभयहरयोः कायवाक्चित्तशुद्ध्या
इत्यध्येष्यो गुरुः स्यात्सकनककुसुमैर्मण्डलं कारयित्वा ॥

ततः प्रणिधानं करोति

वज्रं घण्टां च मुद्रां गुरुमपि शिरसा धारयामीष्टवज्रे
दानं दास्यामि रत्ने जिनवरसमयं पालयाम्यत्र चक्रे।
पूजां खड्गे करोमि स्फुटजलजकुले संवरं पालयामि
सत्त्वानां मोक्षहेतोर्जिनजनककुले बोधिमुत्पादयामि ॥

वज्रं घण्टां च मुद्रां गुरुमपि शिरसा धारयामीष्टवज्रे वज्रकुले स्थित इदं समयं गृह्णामि। दानं दास्यामि। रत्ने कुले स्थितः। पुण्यसम्भाराय दशविधं दानं दास्यामि। लोहरत्नान्नगोवाजिगजकन्यावसुन्धरेष्टभार्यास्वमांसानि दानं दशविधं मतमिति चिन्तामणिं साधयित्वा दास्यामीति प्रणिधानं जिनवरसमयं पालयाम्यत्र चक्रे। चक्रकुले स्थितः पञ्चामृताद्यगोकुदहनं स्कन्धेन्द्रियसमूहं रक्षामीति प्रणिधानं। पूजां खड्गे करोमि खड्गकुले स्थितः सद्गुरुबुद्धबोधिसत्त्वानामन्येषामपि

पूजां सर्वोपकरणैः करोमीति प्रणिधानम्। स्फुटजलजकुले पद्मकुले स्थितः। वर्णावर्णाभिगमनस्फुटपद्मसम्पर्के संवरं ब्रह्मचार्यं पालयामीति। शीलसम्भारायेति प्रणिधानं करोमि। सत्त्वानां मोक्षहेतोर्जिनोत्पादककुल एकशूलवज्रस्थः शून्यताकारुणात्मकां महामुद्रासिद्धां बोधिमहमुत्पादयामि।*

स्नातो गन्धानुलिप्तो व्रतनियमयुतः पूर्वभूम्यां निवेश्य
सिद्धार्थं दन्तकाष्ठं जिनवरकुलिशैश्चाभिमन्त्र्य प्रदेयम्
जिह्वायां चामृतं वै जिनवरसमयैर्धूपमावेशनार्थम्
मन्त्रं हूंकारमेकमरलयसहितं चोदनं क्रोधभर्तुः।

इति प्रणिधाने कृते सत्यभिषेकाय प्रार्थितो गुरुः हृष्टस्तुष्टः सन् शिष्यं स्नातं गन्धानुलिप्तं व्रतनियमयुतं पूर्वभूम्यां मण्डलबाह्ये निवेश्य सिद्ध्यर्थं दन्तकाष्ठं पूर्वोक्तविधिना जिनवरकुलिशैरिति ओं आः हूं एभिः सप्ताभिमन्त्रितं कृत्वा तत्क्षालयित्वा मण्डले क्षिपेत्। येन दिग्विभागेन पतति तत्कर्मप्रसरस्तस्य सिध्यति। पूर्वोक्तशान्त्यादिकमष्टदिक्षु। ततो मुखे चुलुकत्रयमुदकस्य प्रक्षिप्य शुद्धिं कृत्वा मण्डले कण्ठपटं दत्त्वा पूर्वभूम्यामानयित्वा शिष्यं ततस्तस्य जिह्वायां पञ्चामृतं दद्याज्जिनवरसमयैः। पञ्चामृतपञ्चप्रदीपैः पूर्वं धूपं साधयित्वा तदेव धूपं देवतावेशनार्थं तन्मन्त्रं हूंकारमेकम्। अरलयसहितमिति। ओंअररररलललल वज्रावेशय हूं इत्यनेन मन्त्रेण चोदनं क्रोधभर्तुः। क्रोधावेशमित्यर्थः। अस्य कोटिजापेन दशलक्षहोमेन पूर्वसेवां कुर्यात्स्मरणसादृशक्रोधावेशं करोति तस्येदं लक्षणम्। आविष्टः क्रोधराजः प्रहरणस्वकरैस्तर्जयन्मारवृन्दमिति। इह शिष्ये क्रोधराज आविष्टः सन् प्रहरणशोभितकरैः स्थावरं जङ्गमं यं हन्ति तं शतखण्डं करोति। यं तर्जयति तर्जन्या मारवृन्दं धर्मविहेठकं तं भूम्यां पातयति निश्चेष्टिततां नयति। तथा प्रत्यालीढादिपदैर्बहुविधकरणैर्नृत्यते वज्रनृत्यमिति। इह यः शिष्यः प्राक्किञ्चिन्नाट्यलक्षणं न जानाति स एव क्रोधं विष्टः सन् वज्रनृत्यं करोतीत्यन्तरीक्षे बहुविधकरणैरिति नृत्यतेऽथ हास्यं करोति तदा हूंकारमिश्रं भयदमपि रिपोर्मारसमूहस्येति। तथा पूर्वमज्ञो यः शिष्यः

* From *sattvānām* to *utpādayāmi* the skt. text has been restored after the Tib. translation.

स क्रोधाविष्टो मनुष्यादीनामगम्यध्वनिना गीतां करोति । अनेकतन्त्रान्तरेषु यदुक्तमिति । अतः क्रोधराजाविष्टो निर्लज्जो निर्विशङ्को भवति गुणवशात्क्रोधस्वभावात् । देवताऽन्याऽपि सौम्या इत्यथ लोचनादिदेवता सौम्या इति क्रोधावेशनियमः। अत्रापि विस्तरेणापरदशक्रोधानां दशप्रकृतयो मुद्राबन्धेन वेदितव्याः ॥ येन चिह्नेन यस्योत्पादः सा च तस्य हस्तमुद्रा भवति स तया ज्ञातव्य इति नियमः। अन्यदावेशलक्षणं विस्तरभयान्नोक्तम् ॥

इदानीमावेशोपशमनादिकमुच्यते । त्यक्तावेशस्य पश्चाच्छिरसि च हृदये मूर्ध्नि नाभौ च कण्ठे गुह्ये रक्षां जिनैश्च स्वभूमिगतैः कारयेत्स्वत्रिवज्रैः । दत्ताङ्गे पीतवस्त्रस्य पिहितनयनस्यात्र शिष्यस्य वेशः । संवृत्यर्थं व्रतानि प्रवरगतिगतान्येव देयानि तानि । इह यदा शिष्यः क्रोधदेवताधिष्ठितः । तदाऽऽचार्येण प्रष्टव्यो यत्किञ्चित्कार्यमभिमतम् । तत्र ओं आः हूं त्र्यक्षरैः पुष्पमभिमन्त्र्य शिरसि दातव्यम् । तदावेशं त्यजति स्वस्थानं गच्छति । एव त्यक्तावेशो भवति । ततस्त्यक्तावेशस्य पश्चाच्छिरसि रक्षां जिनैश्चेति वचनात्। ओंकारेण शिरसि हृदये हूंकारेण मूर्ध्न्युष्णीषे हंकारेणेत्युपायस्य स्वत्रिवज्रैः कायवाक्चित्तैरिति । एवं नाभौ होकारेण कण्ठे आःकारेण गुह्ये क्षंकारेणेति । प्रज्ञायाः स्वत्रिवज्रैः कायवाक्चित्तैरिति । अत्रोभयोः कायवाक्चित्तवज्रविषये दीर्घो हूंकारो वाग्वज्रम् । ह्रस्वश्चित्तवज्रमन्यत्र यतोऽस्ति । ततो रक्षां कृत्वा दत्ताङ्गे पीतवस्त्रस्य पिहितनयनस्यात्र मण्डले शिष्यस्य प्रवेशो विधेयः । प्रथमं संवृत्यर्थं व्रताद्या बोधिपर्यन्तं संवृतिः पुण्यादिसम्भारः। तस्यार्थं तदर्थं तानि प्रवरगतिगतानीति । प्रवरा भद्रकल्पे सप्तविपश्यादयः शाक्यमुनिपर्यन्तास्तथागतास्तेषां गतिः पुण्यशील ज्ञानसम्भारात्मिका तस्यां गतानि । प्रवरगतिगतान्येव देयानि तानि शिष्यायाचार्येणेति तथागतनियमः । तत्र तु तान्याबोधिपर्यन्तमाह भगवान् ॥

हिंसाऽसत्यं परस्त्रीं त्यजस्व परधनं मद्यपानं तथैव ।
संसारे वज्रपाशः स्वकुशलनिधनं पापमेतानि पञ्च ।
यो यत्काले बभूव त्रिदशनरगुरुस्तस्य नम्ना प्रदेया ।
एषाऽऽज्ञा विश्वभर्तुर्भवभयमथनी पालनीया त्वयापि ॥

हिंसाऽसत्यं परस्त्रीं त्यजस्व परधनं मद्यपानं तथैवेति पञ्चव्रतानि नियम इत्यर्थः। कस्माद्यतः संसारे वज्रपाशः स्वकुशलनिधनानि तानि पापकर्माणि पञ्च। अतो न कर्तव्यानीति नियमः। कस्य विश्वभर्तुरिति यो यत्कालेन बभूव तथागतस्त्रिदशनरगुरुस्तस्य नम्ना प्रदेया एषाऽऽज्ञा विश्वभर्तुर्भवभयमथनी पालनीया त्वयापि। यथा कुलपुत्रैः कुलदुहितृभिः पालिता पुण्यसम्भारायेति तथागतनियमात्पञ्चशिक्षापदी ॥

द्युतं सोऽवद्यभोजं कुवचनपठनं भूतदैत्येन्द्रधर्मम्।
गोबालस्त्रीनराणां त्रिदशनरगुरोः पञ्चहत्यान्न कुर्यात्।
द्रोहं मित्रप्रभूणां त्रिदशनरगुरोः संघविश्वासिनाञ्च।
आसक्तिस्त्विन्द्रियाणामिति भुवनपतेः पञ्चविंशद्व्रतानि ॥

ततो यदीच्छति तदापराणि देयानि। तत्र द्युतं सावद्यभोजं पूर्वोक्तं कुवचनपठनं भूतधर्मम् पितृकार्यं यागकार्यं वेदोक्तम्। दैत्यधर्मं म्लेच्छधर्मं न कुर्यादित्युपपापकानि पञ्च तथा पूर्वापराणां दशानामादिमां पञ्चहत्यां न कुर्यात्सदा। गोहत्या बालहत्या स्त्रीहत्या पुरुषहत्या त्रिदशनरगुरोरिति प्रतिमास्तूपादेर्विसंवादोऽपरहत्येति। तथा मित्रद्रोहं प्रभुद्रोहं बुद्धद्रोहं संघद्रोहं विश्वस्तद्रोहमिति पञ्च न कुर्यादिति। तथाऽऽसक्तिस्त्विन्द्रियाणामिति। रूपासक्तिः शब्दासक्तिर्गन्धासक्ति रसासक्तिः स्पर्शासक्तिः। इति भुवनपतेर्वज्रसत्त्वस्य नियमेन पञ्चविंशतिव्रतानि पालनीयानि शिष्यैरिति वज्राचार्येण देयानि सेककाले शिष्यायेति व्रतदाननियमः ॥

इदानीं मण्डलप्रवेश उच्यते

श्रीमन्त्रेणाभिमन्त्र्य करकमलपुटे पुष्पमेकं प्रदेयम्।
आदौ भ्राम्य त्रिवाराङ्करकमलपुटान्मण्डले पुष्पमोक्षः।
यस्मिन्स्थाने सुपुष्पं पताति नरपते तत्कुलं तस्य नूनम्।
पश्चात्सप्ताभिषेकस्त्रिविध इह तथानुत्तरः सम्प्रदेयः ॥

त्विह प्रथमं व्रतदानान्तरं पीतवस्त्रेण* सर्वकर्मणि मुखं बन्धयेत्। शान्त्यादिषु देवतावर्णवर्णेन सूक्ष्मवस्त्रेण। अनेन मन्त्रेण ओं द्वादशाङ्गनिरोधकारिणे हूं फट् ततश्चक्षुरादीनि निरोधयित्वा कल्याणमित्र-

* Tib adds *raktravastreṇa vā*

मादौ भ्राम्य त्रिवारान्मण्डले ततः पूर्वद्वारे आचार्यो नायकमूर्त्या स्थितः। यदि देवता मण्डल उत्थिता प्रत्यालीढपादेन तदाऽऽचार्य उत्थितः शिष्याय सेकं ददाति। अथ निषण्णा तदा निषण्णो ददाति। ततः कल्याणमित्रेण समर्पितस्य शिष्यस्य शिरसि शंखोदकेन प्रोक्षणं कृत्वा ओं आः हूं इति त्र्यक्षरैः पुष्पमेकं सप्ताभिमन्त्रितं तस्य करकमलपुट आसमन्ताद्देयं पुष्पाञ्जलिविशुद्ध्या। ततः करकमलपुटाद्बाह्ये मण्डलस्य विजयकलशोपरि पुष्पमोक्षः कार्यः। यतो रजोभूम्यां पुष्पादिकं न दातव्यं। दत्ते रजोविलोपो भवति प्रतिष्ठापितमण्डलविलोपात्स्तूपभेद इति। तेन मण्डलबाह्ये पूर्वद्वारे विजयकलशोपरि पुष्पक्षेपः कर्तव्यः कुलपरीक्षार्थं। अन्यथा सहस्रहस्तमण्डले कुतः पुष्पं पतिष्यति शिष्येण क्षिप्तं पूर्वं वज्रार्चिषं त्यक्त्वा। वज्रज्वालाऽपि तत्र सपादहस्तशतं भवति कथं तं लंघयित्वा देवताधिष्ठानेन विना कुलदिक्षु पुष्पं पतिष्यति। तस्माद्विजयकलशे पञ्चचिह्नानि कृत्वा तत्र पुष्पक्षेपः कार्यः। तेन गन्धादिकं मण्डलबाह्ये न रजोभूम्यां। रजोमण्डलं भगवतः कायो ज्ञेयः। नेत्रपटं यौगपद्येन चोदयेत्। अथ प्राक् पुष्पक्षेपं कृत्वा पश्चाच्चोदयेदनेन मन्त्रेण। ओं दिव्येन्द्रियाण्युद्घाटय स्वाहेति नेत्रोद्घाटनं कृत्वा यस्मिन्स्थाने सुपुष्पं त्र्यक्षराभिमन्त्रितं पतति तत्रस्था देवता तस्य कुलदेवता भवति तया कर्ममुद्रासिद्धिरिति नियमः। ततस्तस्य कुलदेवतां दर्शयित्वा पश्चात्सप्ताभिषेक उदकादिकस्त्रिविध इह यथा कलशादिकस्तथा कर्ममुद्रां पूजयित्वाऽनुत्तरो वक्ष्यमाणः सम्प्रदेय इत्याचार्यस्य तथागतनियमः। इदानीं सप्तसेकस्य विधिरुच्यते ॥

नागै राजश्चतुर्भिर्मणिकनकघटैर्मृन्मयैर्वा सरत्नैः
औषधगन्धयुक्तैर्जयविजयघटैः स्नापयेद्देवतानाम्।

मौलीबुद्धप्रभेदैर्ददाति वरगुरुः शक्तिभिः पट्टमेव
वज्रं घण्टार्कचन्द्राद्व्रतमपि विषयैः स्वेन्द्रियैर्योजनीयम् ॥

क्रोधानां मैत्र्यादीनां स्फुटजिनपतिनाऽऽज्ञा प्रदेया समात्रा।
वज्रं घण्टां प्रदाय प्रवरकरुणया देशयेच्छुद्धधर्मम् ॥

इह नागैरित्यष्टाभिश्चतुर्भिर्जयाविजयघटैः पञ्चभिर्जयघटैः पञ्चभिर्विजयघटैरष्टघटपक्षे। त्रिभिर्जयघटैस्त्रिभिर्विजयघटैश्चतुर्घटपक्षे। मणि-

कनकैस्तदभावे मृन्मयैः सरत्नैरौषधगन्धयुक्तैरिति । तत्रौषध्यः पूर्वोक्त-गन्धकक्षपुटे नेत्रादिभागैः संग्राह्याः पञ्चविंशतीनां मध्ये यथालाभतः पञ्च ग्राह्याऽऽचार्येण मूलतन्त्रोक्तविधानेन । तत्र भगवानाह ॥

गन्धकक्षपुटे राजन्नौषधीः पातयेत्क्रमात् ।
नेत्रेन्द्वग्न्यादिभिर्भागैर्ब्राम्ह्याद्याः पञ्चपञ्चकैः ॥
ब्राह्मी नारायणी रौद्री ईश्वरी परमेश्वरी ।
ऐन्द्री लक्ष्मी च वाराही कौमारी चर्चिका तथा ॥
पार्थिवी वारुणी ज्यौतिर्वायवी खेचरी तथा ।
माता च भगिनी पुत्री भागिनेयी स्वसा तथा ।
ब्राह्मणी क्षत्रिणी वैश्या शूद्री डोम्बी तथा स्मृता ।
इत्यौषध्यो महासिद्धिं भुक्त्वा ऋद्धिप्रदाः सदेति ॥

तथा ब्राह्मीति ब्रह्मदण्डी भाग १ । नारायणी विष्णुक्रान्ता भाग १ । रौद्रीति रुद्रजटा भाग ३ । ईश्वरी प्रसिद्धा भाग ४ । परमेश्वरी देवताली भाग ५ । इति प्रथमपञ्चन्यासः । ऐन्द्रीतीन्द्रवारुणी भाग ३ । लक्ष्मीति लक्ष्मणा भाग ४ । वाराही वाराहक्रान्ता भाग ५ । कौमारीति कर्णिका भाग २ । चर्चिकेत्यधः पुष्पिका भाग १ । इति द्वितीयपञ्चक-न्यासः । पार्थिवी माषली भाग ५ । वारुणी रुदन्ती भाग २ । ज्योति-रिति ज्योतिष्मती भाग १ । वायवी लज्जावती भाग ३ । खेचर्यंकरा भाग ४ । इति तृतीयपञ्चकम् । मातेति पुत्रंजारी भाग १ । भगिनी सहदेवो भाग ३ । पुत्रीति कृताञ्जलिर्भाग ४ । भागिनेयाऽजकर्णी भाग ५ । स्वसा मोहनी वटपत्रिका भाग २ । इति चतुर्थपञ्चकन्यासः । ब्राह्मणीति बृहती भाग ४ । क्षत्रिणी भृङ्गराड्भाग ५ । वैश्या यष्टिमधु भाग २ । शूद्री कण्टकारी भाग १ । डोम्बी मयूरशिखा भाग ३ । इति पञ्चमपञ्चकन्यास एवं यथासंख्यं धान्यादिसस्यसमूहः । धान्यां महाधान्यां माषाः श्वेतशणकाः कृष्णतिला इति प्रथमपञ्चकम् । कोद्रवा मुद्गाः कलायाः शुक्लतिला गोधूमा इति द्वितीयपञ्चकम् । मोष्ठं त्रिपुटाः कृष्णसर्षपा यवा माषा इति तृतीयपञ्चकम् । मसूरिकाः शुक्लसर्षपाः कङ्गु तुवरिका वर्वटिका इति चतुर्थपञ्चकम् । अतसी वरटी वर्णं तूलयः कृष्णचणका इति पञ्चमसस्यानि यथालब्धानि ग्राह्याणि कक्षपुटभागे-

नात्र भागा गुटिकासंख्याः। ततो रत्नानि ब्राह्मक्षत्रवैश्यशूद्रजातीनि वज्राणि तथेन्द्रनीलपद्मरागं चन्द्रकान्तकर्केतनं रक्तानीति प्रधानानि तथा लोहानि सुवर्णरूप्यताम्रतीक्ष्णायःकान्तानि। तथा मध्यमरत्नानि मुक्ताप्रवालराजपट्टशूलमणिषड्बिन्दुकश्चेति तथाऽधमानि स्फटिकजीवजातिदोह्लिका च हरितमणय इत्येतानि यथाविभवतो ग्राह्याणि। अथ देवनागानां मणय आज्ञाचक्रवर्तिनो महारत्नाभिषेके पञ्चवर्णा भवन्ति। तदभावे पञ्चवर्णानि सौरभ्यपुष्पानीति नियमो दरिद्राणाम्। अत्र हरितरत्नम् विजयशंखे। नीलवर्णं पूर्वापरजयविजयघटे। कृष्णं पूर्वाग्नेयघटे। रक्तं दक्षिणनैर्ऋत्यघटे। श्वेतमुत्तरेशानघटे। पीतं पश्चिमवायव्यघटे। एवमयःकान्तं तीक्ष्णं ताम्रं रूप्यं सुवर्णम्॥ तथौषध्याः। एकभागिका जयविजयघटे। द्विभागिकाः पूर्वाग्नौ। त्रिभागिका यमदैत्ये। चतुर्भागिका उत्तरेशाने। पञ्चभागिकाः पश्चिमवायव्य इति। तथा गुटिकाभेदेन सस्यानि तथा पूर्वोक्तकक्षपुटगन्धद्रव्याणि पञ्चेति। एवं लोहानि रत्नानि वनौषध्याः सस्यानि गन्धद्रव्याणि घटेषु क्षिप्त्वा तैः पञ्चविंशतिभिः पुनः पोट्टलिकां बद्ध्वा विजयशंखे क्षिपेत्तोयपूर्णे। तेन पञ्चसु जन्मस्थानेष्वभिषेचयेदुष्णीषे स्कन्धे बाहुसन्धौ सव्यवामे। एवं स्फिच्छके कटिसन्धौ ततः कुलदेवताविशोधनाय पुष्पक्षेपमन्त्रः। ओं सर्वतथागतकुलविशोधनि स्वाहा अनेन मन्त्रेणाचार्यः पुष्पमोक्षं शिष्यं कारयेत्। अनेन मन्त्रेण चक्षुरुद्घाटनम्। ओं दिव्यनयनमुद्घाटयामि स्वाहेति। ततः कुलदेवतामण्डलनायकमादिं कृत्वा दर्शयेन्मण्डलं समस्तम्। ततः पूर्वद्वारे कुलशुद्धिं कृत्वाऽऽचार्यः शिष्यं वामहस्तेन सञ्चाल्य कर्मवज्रिणा सार्धं प्रदक्षिणां कृत्वोत्तरद्वारे नीत्वा तत्र कायशुद्ध्यर्थं तारादेवीमन्त्रैः सर्वकलशेषु तोयं गृहीत्वा विजयशंखे प्रक्षिप्योदकाभिषेके पुनः पञ्चसु जन्मस्थानेष्वभिषेचयेत्। अनेन मन्त्रेण ओं आ ई ॠ आ ॡ पञ्चधातुविशोधनि स्वाहा। ततो मुकुटाभिषेके पञ्चसु जन्मस्थानेष्वभिषेचयेत्। अनेन मन्त्रेण ओं अ इ ऋ उ ऌ पञ्चतथागतपरिशुद्ध स्वाहा॥ ततो रत्नहेममुकुटं वस्त्रमुकुटं वा बन्धयेदेवमभिषेकद्वयेन धातुस्कन्धविशुद्ध्यैव कायविशुद्धिर्भवति। कायवज्रभूम्यां कायविशुद्धिं कृत्वा ततो दक्षिणावर्तेन पुनर्दक्षिणद्वारे वाग्विशुद्ध्यर्थं नीत्वा शिष्यं पञ्चसु जन्मस्थानेष्वभिषिच्य पट्टाभिषेक अनेन मन्त्रेण ओं अ आ अं अः ह हा

हं हः हो क्षैं दशपारमितापरिपूरणि स्वाहेति। ततो रत्नपट्टं सुवर्णपट्टं वाऽऽलाभे पुष्पमालां ललाटे बन्धयेदिति। ततो वज्रवज्रघण्टाभिषेके पञ्चसु जन्मस्थानेष्वभिषिच्यानेन मन्त्रेण। ओं हूं हो सूर्यचन्द्रविशोधक स्वाहेति। ततो वज्रवज्रघण्टां शिरसि दत्वा शंखोदकेनाभिषेचयेदिति। ततोऽभिषेकद्वयेन वाग्वज्रं शोधयित्वा वज्राङ्गुष्ठं दत्वा दक्षिणावर्तेन पुनः प्रदक्षिणां कृत्वा पूर्ववक्त्रे चित्तवज्रविशोधनार्थं पञ्चसु जन्मस्थानेष्वभिषेचयेत्। वज्रव्रताभिषेक अनेन मन्त्रेण ओं अ आ ए ऐ अर् आर् ओ औ अल् आल् विषयेन्द्रियविशोधनि स्वाहा। ततः श्रोत्रादिषु पुष्पं दत्वा पुनर्नामाभिषेके पञ्चसु जन्मस्थानेष्वभिषिच्यानेन मन्त्रेण ओं ह हा य या र रा व वा ल ला चतुर्ब्रह्मविहारविशुद्ध स्वाहेति। ततो हस्तपादेषु पुष्पमालां बद्ध्वा कटकनूपुरादीनामभावे ततो नामाभिषेकेन व्याकुर्यात्। अमुकवज्रस्थमिति कृत्वा ततो ज्ञानविशुद्धिनिमित्तं चित्तवज्रं शोधयित्वाऽभिषेकद्वयेन पुनर्दक्षिणावर्तेन शिष्यमानयित्वा पश्चिमवक्त्रे पञ्चसु स्थानेष्वनज्ञाभिषेकेऽभिषिच्यानेन मन्त्रेण ओं हं क्षं धर्मचक्रप्रवर्तक स्वाहेति। अभिषेकं दत्वा कायवाक्चित्तज्ञानवज्राणि सप्ताभिषेकैर्विशोध्य ततः शिष्याय वज्रं वज्रघण्टां करे दत्त्वा अमुकवज्र ताभ्यामाचार्यो वज्रघण्टां प्रदाय प्रवरकरुणया दापयेच्छुद्धधर्ममित्यनेन सार्धश्लोकद्वयेन तद्यथा ॥

कुर्यात्प्राणातिपातं खलु कुलिशकुलेऽसत्यवाक्यं च खड्गे
रत्ने हार्यं परस्वं वरकमलकुलेऽप्येव हार्या परस्त्री।
मद्यं दीपश्च बुद्धाः स्वसकलविषयाः सेवनीयाः स्वचक्रे
डोम्ब्याद्याः कर्तिकायां स्वसकलवनिता नावमन्या स्वपद्मे ॥
देया सत्त्वार्थहेतोः साधनतनुरियं न त्वया रक्षणीया
बुद्धत्वं नान्यथा वै भवति कुलसुतानन्तकल्पैर्जिनोक्तम्।
तोयं तारादिदेव्यो मुकुट इह जिनाः शक्तयो वीरपट्टः
वज्रघण्टार्कचन्द्रौ व्रतमपिविषया नाममैत्र्यादियोगः ॥
आज्ञासम्बोधिलक्ष्मीर्भवभयमथनी कालचक्रानुविद्धा
एते सप्ताभिषेकाः कलुषमलहरा मण्डले सम्प्रदेयाः ॥

इति सप्ताभिषेकविधिं मण्डले कृत्वा ततः शिष्याय बुद्धाधिष्ठानं चिन्तयेदाचार्यः। ज्येष्ठकनिष्ठाद्यर्थम्। संवत्सरादिकमुद्धो * * *

* * * * * * *[1]

भिषेको रूपादिविषयचक्षुरादीन्द्रियसंशुद्धिः प्राकृतविषयनियमेन महामुद्रासिद्धिप्रापकत्वाद्वज्रव्रताभिषेकः पञ्चमः। ब्राह्मणादिवर्णानामेककल्कत्वाभिप्रायेणामुकवज्र इति नामकरणान्मैत्र्यादिचतुर्ब्रह्मविहारपरिपूर्त्या सर्वकालं रागद्वेषादिविशुद्धिर्निवारणत्वेनेति नामाभिषेकः षष्ठः। अपरिमितसत्त्वधातोर्यथाशयवशेन संवृतिपरमार्थविभागेन परमगुह्यवज्रयानदेशनार्थमनुज्ञाभिषेको बुद्धत्वनिष्पादकः सप्तमः। एते सप्ताभिषेका रजोमण्डलं विहाय नान्यत्र पटादिमण्डले देयाः कुम्भादयस्तु सेकमण्डलवर्तनमन्तरेणापि देयाः। पूर्वोद्दिष्टैकादशसेकानां मध्ये लौकिकलोकोत्तरसिद्धिसौधसोपानभूतानधरसंवृतिरूपान्सप्तसेकान्व्याख्याय योगिसंवृतिभूतां लौकिकसिद्धिसाधनान् परमार्थानुकुलांस्त्रिविधसेकान् कुम्भेत्यादिनोद्दिशति ॥

दिग्वर्षं यावदेका भवति दशविधा दर्शनस्पर्शनीया
तस्मादालिङ्गनीयाः सरसजलधयः सेवनीयाश्च लभ्याः।
विंशद्वर्षोर्ध्वमुद्रा परमभयकरा क्रोधभूतासुरांशा
सेकार्थे षट्चतस्रः समसुखफलदाश्चापरा भावनार्थम् ॥
श्रीप्रज्ञास्पर्शनं यत्प्रथममपि कुचे कुम्भसेकः स एव
गुह्याद्गुह्याभिषेको भवति शशधरास्वादनालोकनाभ्याम्।
प्रज्ञाज्ञानाभिषेके सकलजिनकुलैः शोधयित्वाङ्गवक्त्रै-
र्मुद्रा शिष्याय देया जिनमपि गुरुणा साक्षिणं चात्र कृत्वा ॥
सर्वालङ्कारयुक्तां द्रुतकनकनिभां द्वादशाब्दां सुकन्याम्
प्रज्ञोपायात्मकेन स्वकुलिशमणिना कामयित्वा सरागाम्।
ज्ञात्वा शिष्यस्य शुद्धिं कुलिशमपि मुखे क्षेपयित्वा सबीजम्
पश्चाद्देया स्वमुद्रा त्वथ पुनरपरा धूममार्गादियुक्ता ॥
त्रस्ता विभ्रान्तचित्ता शब्दा(?) परवशगा व्याधियुक्ता प्रसूता
क्रोधा स्तम्भार्थलोभाऽनृतकलहरता स्वाङ्गहीना विशुद्धा।
एताः प्रज्ञाभिषेके स्वनिपुणगुरुणा वर्जनीया नरेन्द्र
पूर्वोक्ता बुद्धभक्ता गुरुसमयधरा सर्वदा वन्दनीयाः ॥

[1] A blank of about three leaves begins here in the MS.

इदानीमुत्तराभिषेकविधानं कलशादित्रयमुत्तरसेक उच्यते। इह कलशादिसेकार्थम्। मुद्रां दशवर्षं यावद्वर्जयेत्कुमारिकां यत एका प्रज्ञापारमिता दशविधा भवति दानादिविशुद्ध्या प्रतिवार्षिका। अत्रापि यावद्दन्तपातो न भवति तावज्ज्ञानधातुरव्ययत्वात्। ततो दन्तपाताद् आकाशधातुः। एवं धातुद्वयेन कुमारिकाऽक्षतयोनिः॥ सा तेन दर्शनीया स्पर्शनीया पूजनीयेति तस्माद्दशवर्षादेकादशवर्षमादिं कृत्वा यावद्विंशतिवर्षाण्यालिङ्गनीया षड्भिः सह चतस्रः सेवनीया वायुधात्वादयः। अतो वायुधातुरेकादशवर्षे। द्वादशे तेजः। त्रयोदशे तोयम्। चतुर्दशे पृथिवीति चतस्रः। पञ्चदशे शब्दः। षोडशे स्पर्शः। सप्तदशे रसः। अष्टादशे रूपम्। एकोनविंशते गन्धः। विंशतितमे धर्मधातुरिति। ततो विंशतिवर्षादूर्ध्वं मुद्रा परमभयंकरा क्रोधभूतासुरांशा। विंशतिवर्षादेकविंशतिवर्षमारभ्य प्रत्येकवर्षिका यथासङ्ख्यम्। अतिनीला। अतिबला। जम्भी। मानी। स्तम्भी। मारीची। चुन्दा। भृकुटी। वज्रशृंखला। रौद्राक्षीति दशक्रोधदेवत्यः। तत एकत्रिंशद्वर्षाद्यष्टौ भूतांशाः। चर्चिका। वाराही। रौद्री। ऐन्द्री। ब्राह्मणी। महालक्ष्मी। कौमारी। वैष्णवीति। एकोनचत्वरिंशद्वर्षादष्टावसुरांशाः। श्वानास्या। सूकरास्या। व्याघ्रास्या। जम्बुकास्या। गरुडास्या। उलुकास्या। गृध्रास्या। काकास्येति षट्चत्वारिंशद्वर्षाणि यावन्मुद्राभावनार्थम्। सेकार्थं पुनः षट्चतस्रः समसुखफलदाः। तेजोधातुमारभ्य यावद्धर्मधातुरिति। वायुधातुवज्रस्थानुग्राह्येति नियमः। इहोत्तराभिषेको द्विधा। एकः सत्त्वावतारणार्थं मार्गपरिज्ञानाय तन्त्रश्रुताधिकारायेति। अपरो महाचार्यपददानाय देशककरणायेति। अतः पूर्वाभिषेके तावत् त्रस्ता विभ्रान्तादिदोषरहिता द्वादशाब्दादिसुकन्या परिपाचिता शिष्येण गुरोः समर्पनीया। ततोऽध्येषणादिकं कृत्वा शिष्यो गुरुमध्येषयति वक्ष्यमाणस्तुत्या। ततस्तुष्टो गुरुर्लोकसंवृत्या स्तनस्पर्शनं कारयति स्वमुद्रायास्तेन कलशाभिषेकः स एव। ततो गुह्यपूजां कृत्वा शिष्यायामृतं ददाति मुद्रारविन्दं चालोकयति तेन गुह्याभिषेको भवति। शशधरास्वादनालोकनाभ्याम्। ततः प्रज्ञाभिषेके पञ्चकुलकलापिनीं कृत्वा ओंकारादिबीजैस्ततो मुद्रा शिष्याय देया पाणिभ्यासिद्धन्द्वकरणाय च गुरुणा जिनं वज्रसत्त्वं साक्षिणं कृत्वा यथायं दुर्भगः सत्त्वोऽस्याधि-

कारात्र भावनादिके तन्त्रश्रावणाय शिष्याणां तन्त्रदेशनाय मण्डललेखनायेति । प्रथमं शिष्यावतारणाभिषेकनियमः ॥

तथा हसितेनाचार्यो द्विगुणात्मकशुक्रसुखेन देवविशुद्ध्या गुह्य इतीक्षणेन त्रिगुणात्मकविशुद्ध्या पाणिव्यासिरिति चतुर्गुणात्मकाविशुद्ध्या द्वन्द्वमिति पञ्चगुणात्मकशुक्रसुखेन देवविशुद्ध्येति । लौकिकसंवृत्या सत्त्वावतारणाय चतुर्विधोऽभिषेकः । ततः सर्वतन्त्रे श्रुते ज्ञाते सटीके महाधिपतित्वाय । यथानुक्रमेणोक्ता दशविद्याः समर्पणीयाः गृहस्थशिष्येन गुरवे । अत्र मूलतन्त्रे भगवानाह ।

भागिनेया दुहित्री च भगिनी जननी तथा ।
भार्याया जननी चैव मातुलस्य तथाङ्गना ॥

पितुर्भ्रातुस्तथा भार्या भगिनी जनकस्य तु ।
स्वमातुर्भगिनी चैव स्वभार्या वररूपिणी ॥

ताराद्या धर्मधात्वन्ता दशविद्याः स्वगोत्रजाः ।
सेककाले प्रदातव्याः शिष्येण मोक्षकांक्षिणा ॥

न ददाति गुरोर्विद्या यद्येताः कुलरक्षणात् ।
तदा सेको न दातव्योऽन्याभिर्गृहवासिनाम् ॥

मण्डले अभिषिक्ताभिरन्याभिः शूद्रजातिभिः ।
भिक्षूणां श्रामणेराणां दातव्यो गुरुणा नृप ॥

वायव्याद्यास्तु क्रमाच्छूद्री क्षत्रिणी ब्राह्मणी तथा ।
वैश्या डोम्बी च कैवर्ती नटीका रजकी तथा ॥

चर्मकारी च चण्डाली धर्मधात्वन्तजा दश ।
महाविद्याः समाख्याता भुक्तिमुक्तिफलप्रदाः ॥

इति । एवमुक्तक्रमेण दशपारमिता दशवशिता दशभूमिदशबलान्याभिर्विशुद्धानि भवन्तीत्याधिपत्यकरणाय दशमुद्रा देया मण्डलाचार्यपदाभिलाषिणेति तथागतनियमः । एवं दशमुद्राः समर्प्य शिष्यो गुरोस्तत आदेशं प्रार्थयति । इदानीं मया किं कर्तव्यं हे भगवन् । सर्वपारमिताप्राप्तस्तत आचार्यो ब्रूत इमां स्वकीयां भार्यां गृहीत्वा दशानां मध्ये तया सार्धं ममाध्येषणां कुरु । भिक्षुश्रामणेराणां च-

ण्डाली स्वभार्या कर्तव्या। ततो गुरुनियमेन तां गृहीत्वा कनकादि-कुसुमैर्मण्डलं द्वे कुरुतः। ततोऽध्येषयतः।

नमस्ते कालचक्राय सर्वावरणहानये।
परमाक्षरसुखापूर्ण ज्ञानकाय नमोऽस्तु ते॥

शून्यताकरुणाभिन्नं बोधिचित्तं यदक्षरम्।
तेन सेकेन मे नाथ प्रसादं कुरु साम्प्रतम्॥

पुत्रदारादिभिः सार्धं दासोऽहं तव सर्वदा।
आबोधिमण्डपर्यन्तं नान्योऽस्ति शरणं मम॥

इत्यध्येषितवन्तं सपत्नीकं शिष्यं तुष्टाचार्यः शब्दवज्रां सर्वालङ्कारानपसर्य * * कृत्यालिङ्गयति। गृहिणस्तु भार्याया मातरम्। ततः पूर्वे तारा। दक्षिणे पाण्डरा। उत्तरे मामकी। पश्चिमे लोचना। आग्नेयां स्पर्शवज्रा। नैर्ऋत्यां रसवज्रा। ईशाने रूपवज्रा। वायव्ये गन्धवज्रेति। योगिनीचक्रं नग्नं मुक्तकेशं कर्तिकपालहस्तं विरचयेन्नवविद्याभिर्यथानुक्रमेणेति। एवं पूर्वाभिषेकस्तोयादिना सप्तविधः। तत उत्तराभिषेकः सामान्यकर्ममुद्रया॥ उत्तरोत्तराभिषेकः पूर्वोक्ताभिः शूद्रजादिभिर्मुद्रासमर्पणाय दशाभिरष्टाभिर्घटैर्जयविजयाभ्यां स्नापयेद्भिक्षुं श्रामणेरं तासां मध्ये षड्भिर्मुद्राभिश्चतुर्भिः कलशैः स्नापयेज्जयविजयाभ्यामपि। गृहस्थं तासां नवानां मध्य एकया स्वभार्ययैकेन विजयघटेनाभिषेचयेत्पूर्वोक्तविधिना॥

ततो मुद्रां समर्पयेत्कलशसेकदानार्थम्। इति।

अत्र सर्वालङ्कारयुक्तां द्रुतकनकनिभां द्वादशाब्दां सुकन्यां विंशतिवर्षपर्यन्तां प्रज्ञोपायात्मकेन देवतायोगेन स्वकुलिशमणिना कामयित्वा सरागां रजोबलां ज्ञात्वा शिष्यस्य शुद्धिं उत्तरोत्तराभिषेके कुलिशमपि मुखे क्षेपयित्वा सबीजम्। पश्चाद्देया मुद्राऽऽचार्येण याऽऽलिङ्गिताऽथवा पुत्रस्य भार्या स्वयमाचार्योऽभिगच्छति ततः सेकक्षणे प्राप्ते शिष्याय पुनः स्वभार्यां समर्पयेत्। शिष्यस्याक्षिणी बद्ध्वा गुरुः प्रज्ञाया नरनासिकां * * *। ततो भार्याज्ञानेन स्वमुद्रां समर्पयेदाचार्य इति सर्वत्र सेकविधिर्महाधिपत्ये। यदि दशमुद्रास्तदा यां यां

कामयितुं समर्थः शिष्यस्तां तां समर्पयेत्। अर्धरात्राद् घटिकाद्वयोर्ध्वं यावत्सूर्योदयं ततो विसर्जयेद्गणचक्रं विसृज्य च शिष्याय संवरं दद्यात्। इदं यन्मया कथितं संवृत्या विरमान्तं सहजलक्षणं यद्बिन्दुत्रयान्तं तद्विवृत्या भवति। विवृत्याऽच्युतं सुखं योगिनां तेनेदं त्वया महासुखं रक्षणीयम्। तदुक्तं मूलतन्त्रे।

कर्ममुद्राप्रसङ्गेऽपि ज्ञानमुद्रानुरागने।
रक्षणीयं महासौख्यं बोधिचित्तं दृढव्रतैः॥

* * * * प्रतिष्ठाप्य बोधिचित्तं न चोत्सृजेत्।
भावयेद्बुद्धबिम्बं तु त्रैधातुकमशेषतः॥

अनेन रक्षितेनैव बुद्धत्वमिह जन्मनि।
शीलसम्भारसम्पूर्णं पुण्यज्ञानसमन्वितम्॥

दशपारमिताप्राप्ताः सम्बुद्धास्त्र्यध्ववर्तिनः।
अनेन सर्वसम्बुद्धैर्धर्मचक्रं प्रवर्तितम्॥

अतः परतरं नास्ति ज्ञानं त्रैधातुकेश्वरम्।
शून्यताकरुणाभिन्नं स्वपरार्थप्रसिद्धये॥

यदि पालयसि मे पुत्र संवरं सर्वतायिनाम्।
तदा लप्स्यसे सम्बोधिं सर्वबुद्धैरधिष्ठिताम्॥

अथ रागाभिभूतात्मा न पालयसि संवरम्।
गृहीत्वा पुरतो भर्तुस्तदा यास्यसि रौरवम्॥

मृदुचित्ताद्यदा * * बोधिचित्तं च्युतं भवेत्।
पद्मबाह्यं तदा ग्राह्यं ज्ञात्वा मुद्रां स्वजिह्वया॥

इति संवरं दत्त्वाऽऽचार्यः शिष्याय शिष्योऽपि गुरुदक्षिणां दत्त्वा पुनर्मण्डलं कृत्वा प्रार्थयेत्। भगवान्मे सेकप्रक्रियां प्रसादं करोतु। ततः शिष्यमामन्त्रयेद्गुरुः। शृणु त्वं पुत्र यथा संवृत्या षोडशानन्दलक्षणं सर्वसत्त्वानां सुखं साधारणमेकविंशत्यधिकशतादिवृत्तैरुद्धृत्तं परमादिबुद्धता। मञ्जुवज्रेण कामाक्षोभमित्यादिभिः।

कामाक्षोभं करोति स्वमनसि जगतः पूर्णतां याति पूर्णा
पूर्णज्वालाब्जबिन्दुं स्रवति शशधरं द्रावयित्वोत्तमाङ्गात्।

ओँ ण्ट्राश्लिष्टं प्रकृत्या ददाति वरसुखं बिन्दुमोक्षत्रयान्ते
आलोकस्पर्शसङ्गं * * सुखमथानन्दभेदादिनैतत् ॥

कामानन्दं करोति प्रथममपि नृणां चक्षुरालोकनेन
पश्चात्पूर्णाप्रसङ्गे पुनरपि परमानन्दमेव स्वकाये ।
ज्वालाबिन्दुं स्रवन्ती रमती च विरमानन्दवज्रेण पद्मे
ओँ ण्ट्रा बिन्दुत्रयान्ते क्षरगतसहजानन्दवज्रं करोति ॥

कामानन्दन्तृकाम्याक्षरणमपि चतुष्केन योगः स एकः
पूर्णः शक्त्युद्भवो वै भवति च परमानन्द एव द्वितीयः ।
ज्वालाबिन्दुश्च घूर्णः पुनरपि विरमानन्द एव तृतीयः
ओँ ण्ट्रा नादश्च निद्रा भवति च सहजानन्द एवं चतुर्थः ॥

इह सर्वस्य जगतः कामो मनसि क्षोभं करोति प्रथमानन्दमिति। ततः पूर्णतां याति पूर्णावस्था ललाटे बोधिचित्तपूर्णत्वात्प्रज्ञालिङ्गनादिना द्वितीयः परमानन्द इति। ततः पूर्णादुत्तमाङ्गात् * * * ज्वालावस्था विन्दुं स्रवति शशधरं स्रावयित्वा तृतीयं विरमानन्दं करोतीति। तत ओँ ण्ट्रावस्था * * * * काले कायवाक्चित्तबिन्दूनामवसाने चतुर्बिन्दुनिर्गमकाले सहजानन्दं करोतीत्येवं प्रतिपदादिपञ्चपञ्चकलाभिराकाशवायुतेजउदकपृथ्वीस्वरूपाभिर्नन्दाभद्राजयारिक्तापूर्णानामभिः । अ इ ऋ उ ऌ क। आ ए अर् ओ अल् च। ह य र व ल ट इत्येतत्स्वरधर्माभिः॥ एवं पञ्चम्यानन्दपूर्णा। दशमी परमानन्दपूर्णा। पूर्णिमा विरमानन्दपूर्णा। सहजानन्द इति षोडशी कला। सर्वधातूनां समाहारो मेलापकः समाजः संवर इति। एवं रागो बोधिचित्तस्य शुक्लपक्षः। विरागः कृष्णपक्ष इति। यथा नामसङ्गीत्यां—

विरागादिमहारागो विश्ववर्णो ज्वलप्रभः ।
सम्बुद्धवज्रपर्यङ्को बुद्धसङ्गीतिधर्मधृक् ॥

इति। तथा—

सर्वाकारो निराकारः षोडशार्धार्धबिन्दुधृक् ।
अकलः कलनाभीतः चतुर्थध्यानकोटिधृक् ॥

इति भगवतो नियमः। विमूल्या पञ्चमपटले महामुद्राज्ञानं विस्तरेण ज्ञातव्यं नात्र विस्तरितम्॥ इदानीं षोडशानन्दानां चतुर्योगा उच्यन्ते। कामा इत्यादिनेह सर्वसत्त्वानां जाग्रत्स्वप्नसुषुप्ततुर्यावस्थाभेदेन कायवाक्चित्तज्ञानयोगः। ते चानन्दा भेदेन षोडश। तत्र कामा इति कायानन्दः। आनन्द इति वागानन्दः। कम्पेति चित्तानन्दः। अक्षर इति संज्ञया ज्ञानानन्दः। एवं चतुष्केनानन्दयोग एक इति। तथा पूर्णा इति कायपरमानन्दः। अत्र परमानन्दादित्रयोऽन्तादिना वाक्चित्तज्ञानवज्राणि छन्दोवशादिति। अतः परमानन्द इति वाक्परमानन्दः। तद्भवश्चित्तपरमानन्दः। शक्तिरिति ज्ञानपरमानन्दः। इति द्वितीयो योगः। ज्वाला इति कायविरमानन्दः। विरमानन्द इति वाग्विरमानन्दः। घूर्ण इति चित्तविरमानन्दः। बिन्दुरिति ज्ञानविरमानन्द इति तृतीयो योगः। तथा ओँ ण्ह्रा इति कायसहजानन्दः। सहजानन्द इति वाक्सहजानन्दः। निद्रेति चित्तसहजानन्दः। नाद इति ज्ञानसहजानन्दः। एवं चतुर्विधः कायः। निर्माणसम्भोगधर्मस्वाभाविकभेदेन कायश्चतुर्धा वाक् चतुर्धा चित्तं चतुर्धा ज्ञानं चतुर्धेति। एवं षोडशानन्दभेदाः श्रीतन्त्रे विस्तरेण द्रष्टव्या इति षोडशानन्दं सहजमिति नियमः॥ ॥ लौकिकसिद्धिसाधनांस्त्रिविधसेकानुद्दिश्य लोकोत्तरसिद्धेरसाधारणकारणमेकादशं सेकमाह पुनरित्यादि। महाप्रज्ञेति। अविकल्पितसङ्कल्पा वक्ष्यमाणा महामुद्रा तस्या भावनया ज्ञानं तज्जं महाक्षरं महासुखमेकादशसेकः। डकिनीवज्रपञ्जरेऽप्येकादशैव सेका उक्तास्तथा हि।

प्रथमं तोयसेकेन द्वितीयं मौलिसेकतः।
तृतीयं पट्टसेकेन चतुर्थं वज्रघण्टया॥
पञ्चमं स्वाधिपेनैव नामसेकं तु षष्ठमम्।
बुद्धाज्ञा सप्तमं सेकं कलशं सेकमष्टमम्॥
नवमं गुह्यसेकेन दशमं प्रज्ञाभिषेकतः।
तत्त्ववज्रप्रयोगेन सर्वान्वज्रव्रतान्ददेत्॥
व्याकरोति स्वयं शास्ता एष सेकविधिं स्वयम्।
आचार्यो नावमन्तव्यः सुगताज्ञां न लंघयेत्॥

इति । एवमेकादशोऽभिषेकः प्रधानस्तत्त्ववज्रप्रयोगेनेति भगवतो विस्पष्टवचनाच्चतुर्थो वैकादशो वाऽभिषेकः पृथग्वावगन्तव्यो विद्वद्भिरिति । यथासङ्ख्यमेषां कुम्भादीनां चतुर्णां सान्वयानि क्षराक्षरस्पन्दनिस्पन्दाख्यानि नामानि । कायेत्यादि सुगमम् । तथा बालप्रौढवृद्धप्रजापतिसंज्ञकानि । प्रज्ञेति द्वादशाब्दामारभ्य यावद्विंशत्यब्दा तस्याः स्वचेतोरम्यायाः अभिषेके भव्यायाः * * * स्पर्शेन बोधिचित्तच्युतमिति । चतुर्दलोष्णीषपद्माच्छुक्रामृतधारायाः षोडशदलललाटेकमलकर्णिकायामागमनेन यत्कायानन्दवागानन्दचित्तानन्दज्ञानानन्दात्मकं सुखानुभवनं तद्बालम् । प्रथमसेकप्राप्तत्वाद्योगी पयोधराभिषिक्तो बाल इत्युच्यते । ततस्तस्या * * ईषद्वज्रोद्दोलनेन बोधिचित्तच्युतमिति । द्वात्रिंशद्दलकरकमलादष्टदलहृत्कमलकर्णिकायां यत्कायपरमानन्दवाक्परमानन्दचित्तपरमानन्दज्ञानपरमानन्दात्मकं सुखानुभवनं तत्पूर्वादतिरिच्यमानत्वात्प्रौढो गुह्याभिषेकः । ततो गाढोद्दोलनेन स्पन्दं गत इति चतुःषष्टिदलनाभिकमलाद्द्वात्रिंशद्दलगुह्यकमलागमनेन शुक्रेन्दोः पञ्चदशकमलस्याग्रगस्वच्छद्रवस्य स्पन्दाख्यस्य वज्रमणिशुषिरपर्यन्तागमनेन च यदधिमात्रं कायविरमानन्दवाग्विरमानन्दचित्तविरमानन्दज्ञानविरमानन्दात्मकं सुखानुभवं स वृद्धः प्रज्ञाज्ञानाभिषेकः । महामुद्रेति । गगनोद्भवबिम्बं तस्याः स्वरसबाह्यभावनाख्यानुरागाज्जातं निःस्पन्दत इति निरुद्धो वज्रमणेर्बाह्यस्पन्दः । * * ऽच्युतसुखतया यस्य चन्द्रामृतस्य स कायसहजानन्दवाक्सहजानन्दचित्तसहजानन्दज्ञानसहजानन्दात्मको महाज्ञानाख्यः चतुर्थः सेकः । तत्पुनस्तथेति वाक्याभिधेयः । असौ निरावरणलोकोत्तरज्ञानाधिगतः सिद्धरसवत्ताम्रादिधातूनां स्वर्णाभावेनैव सावरणस्कन्धधात्वादीनां पञ्चतथागतपञ्चदेव्यादिप्रजाभावेन निष्पादकत्वात्प्रजापतिः । तायः स्वदृष्टमार्गोक्तिः । तद्योगात्तायिनस्तथागतादयः । उदितपरमाक्षरज्ञानस्य योगिनः कायादिव्यवस्थापनं श्रीकालचक्रे कथितं ॥

स्वच्छः कायोऽणुनष्टः प्रभवति खसमो लक्षणाद्यैः प्रपूर्णः
स्वच्छं त्रैलोक्यमेवावरणविरहितं स्वप्नवद्भाति विश्वम् ।
भाषाच्छिद्रासमन्तात्परहृदयगतानेकभाषान्तरेण
चित्तं सत्सौख्यपूर्णं चलति सहजालिङ्गितं सर्वकालम् ॥

इति । असावेवाद्वयोऽक्षर ऊर्ध्वरेता गुह्यनाभिहृत्कण्ठगमनेन यथाक्रमं वज्रसत्त्वादिनामचतुष्टयं लभते । ललाटगः पूर्वोक्तविशुद्धादिचतुर्विधयोगाख्यः । उष्णीषगः कालचक्र इति नामेति षट्सत्त्वाः । इदानीं लोकोत्तरसिद्धेरसाधारणकारणं षडङ्गयोगमुद्देष्टुमाह । अस्यैव साधनं कुर्यादित्यादिना । तथा हि । प्रतिभासैरचिन्तितैरित्यारभ्य विश्वबिम्बं प्रभास्वरमित्यन्तेन षडङ्गयोगस्य प्रत्याहाराख्यं प्रथमाङ्गमुद्दिष्टम् । पिहितापिहितेत्यादिश्लोकेन ध्यानाङ्गम् । दृष्टे बिम्बे तत इत्यादिश्लोकेन प्राणायामाङ्गम् । प्राणं बिन्दौ निवेशयेदित्यनेन धारणाङ्गमप्युद्दिष्टम् । अनुस्मृत्याद्यङ्गद्वयस्य तु तदर्थोद्देशसामर्थ्यादुद्देशोऽपि यथायोगमूहनीयः । षडङ्गयोगश्च सम्यक्सम्बोधिलक्षणाया उत्तमायाः सिद्धेः साधनत्वेनोद्देशनिर्देशप्रतिनिर्देशैः समाजोत्तरे भगवता कथितो यथा ।

अन्तर्धानादयः सिद्धिसामान्या इति कीर्तिताः ।[1]
सिद्धिमुत्तमामित्याहुर्बुद्धा बुद्धत्वसाधनम् ॥
चतुर्विधमुपायं तु बोधिवज्रेण वर्णितम् ।
योगतन्त्रेषु सर्वेषु शंस्यते योगिनां सदा ॥
सेवाविधानं प्रथमं द्वितीयमुपसाधनम् ।
साधनं तु तृतीयं वै महासाधनं चतुर्थकम् ॥
सामान्योत्तमभेदेन सेवा च द्विविधा भवेत् ।
वज्रचतुष्केण सामान्योत्तमा षड्भिरङ्गतः ॥
प्रथमं शून्यताबोधिर्द्वितीयं बीजसंग्रहम् ।
तृतीयं बिम्बनिष्पत्तिश्चतुर्थं न्यासमक्षरम् ॥
एभिर्वज्रचतुष्केण सेवा सामान्यसाधनम् ।
सेवा ज्ञानामृतेनैव कर्तव्या सर्वतः सदा ॥

---

1 These lines are quoted from Guhyasamājatantra (G. O. S. edition, p. 162). The following variant readings are to be remarked: śloka 1: *siddhāḥ sāmānyāḥ*; 4: *sāmānyamuttamam jñānāmṛtena ca*; 5: *bījasamhṛtam*; 6: *uttame jñānāmṛte caiva kāryam yogaṣaḍaṅgataḥ*; 7: *sevāṣaḍaṅgayogena*; 8: *ṣaḍaṅgo yogo*; 9: *svavṛttisthānān*; *pratyāhāramiti proktamāhārapratipattaye*; 10: *pañcadhā*; 11: *vitarkam ca*; *vicāram ca*; 12: *guhyam tarkodayam tarkam vicāram tatprayogataḥ*; 16: *niruddhya cendriyam ratnam dhārayan dhāraṇā smṛtam*; 17: *nimittamupajāyate*; *tu* instead of *tad* and vice versa; 18: *dīpavajjvalam*; 19: *sphārayīta*; 20: *samsmaret*; 22: *jhaṭiti jñānaniṣpattiḥ samādhiriti sañjñitaḥ*; 23: *adhiṣṭhyate*; 24: *dhāraṇānubalāmityam*; 25: *nirāvaraṇavān bhavet*.

सेवां षडङ्गयोगेन कृत्वा साधनमुत्तमम् ।
साधयेदन्यथा नैव जायते सिद्धिरुत्तमा ॥

प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।
अनुस्मृतिः समाधिश्च षडङ्गयोग उच्यते ॥

दशानामिन्द्रियाणां तु स्ववृत्तिस्थं तु सर्वतः ।
प्रत्याहार इति प्रोक्तः कामाहारं प्रति प्रति ॥

पञ्चकामाः समासेन पञ्चबुद्धप्रयोगतः ।
कल्पनं ध्यानमुच्येत तद्ध्यानं पञ्चविधं भवेत् ॥

वितर्कश्च विचारश्च प्रीतिश्चैव सुखं तथा ।
चित्तस्यैकाग्रता चैव पञ्चैते ध्यानसंग्रहाः ॥

गुह्यतन्त्रेषु सर्वेषु विविधाः परिकीर्तिताः ।
गुह्यत्रयोदयस्तर्को विचारस्तत्प्रयोगता ॥

तृतीयं प्रीतिसङ्काशं चतुर्थं सुखसंग्रहम् ।
स्वचित्तं पञ्चमं ज्ञेयं ज्ञानज्ञेयोदयक्षयम् ॥

सर्वबुद्धमयं शान्तं सर्वकामप्रतिष्ठितम् ।
पञ्चज्ञानमयं श्वासं पञ्चभूतस्वभावकम् ॥

निश्चार्य पिण्डरूपेण नासिकाग्रे तु कल्पयेत् ।
पञ्चवर्णं महारत्नं प्राणायाममिति स्मृतम् ॥

स्वमन्त्रं हृदये ध्यात्वा प्राणं बिन्दुगतं न्यसेत् ।
निरुद्धमिन्द्रियं रत्नं धारयेद्धारणं स्मृतम् ॥

निरोधवज्रगते चित्ते निमित्तोद्ग्रहः प्रजायते ।
पञ्चधा तन्निमित्तं तु बोधिवज्रेण भाषितम् ॥

प्रथमं मरीच्याकारं धूमाकारं द्वितीयकम् ।
तृतीयं खद्योताकारं चतुर्थं दीपमुज्ज्वलम् ॥

पञ्चमं तु सदालोकं निरभ्रगगनोपमम् ।
स्थिरं तु वज्रमार्गेण स्फारयेत्तं स्वधातुषु ॥

विभाव्य यदनुस्मृत्या तदाकारं तु संस्फरेत् ।
अनुस्मृतिरिति ज्ञेयं प्रतिभासस्तत्र जायते ॥

प्रज्ञोपायसमापत्त्या सर्वभावान् समासतः ।
संहृत्य पिण्डयोगेन बिम्बमध्ये विभावयेत् ॥

झटिति ज्ञाननिष्पत्तिः समाधिरिति संज्ञितम् ।
प्रत्याहारं समापद्य सर्वमन्त्रैरधिष्ठ्यते ॥

ध्यानज्ञानं समापद्य पञ्चाभिज्ञात्वमाप्नुयात् ।
प्राणायामेन नियतं बोधिसत्त्वैर्निरीक्ष्यते ॥

धारणाया बलान्नित्यं वज्रसत्त्वः समाविशेत् ।
अनुस्मृतिसमायोगात्प्रभामण्डलं जायते ॥

समाधिवशितामात्रे निरावरणता भवेत् ।

इत्येषां श्लोकानां सङ्क्षेपतो विवृतिरुच्यते ।

सेवा ज्ञानामृतेनैवेत्यादि । सेव्यते मुमुक्षुभिरभ्यस्यत इति सेवा । किं तद्धूमादिबिम्बदर्शनपर्यन्तं प्रत्याहाराङ्गं ध्यानाङ्गं च सा खल्तूत्तमा सेवा ज्ञानामृतेनैव षडङ्गयोगेनैव कर्तव्या निष्पाद्या सर्वतः सर्वात्मना सदा सर्वकालमेवकारोऽवधारणे । एष हि ज्ञानामृताख्यः षडङ्गयोगः ॥

॥ प्रत्याहार इत्याद्युद्देशपदानां निर्देशप्रतिनिर्देशावाह दशानामित्यादिभिः श्लोकैः । तत्रेन्द्रियाणीन्द्रियार्थाश्चेन्द्रियाणि तेषां दशानामिन्द्रियाणां विषयविषयिणां स्ववृत्तिः स्वस्मिन्नात्मन्यनुवृत्तिर्वर्तनम् । सत्तामात्रता स्ववृत्तिः । विषयविषयिणां विषयभावोपगमनविषयग्रहणव्यापारापरतिः स्ववृत्तिरित्यर्थः । तत्रस्थितत्वं स्ववृत्तिस्थं न तु ग्राह्यग्राहकस्वरूपेण प्रवृत्तिः स्ववृत्तिः । अमुमेवार्थमाह कामाहारं प्रति प्रतीतिनिर्देशेन । काम्यन्तेऽभिलष्यन्त इति कामा रूपादयो विषयास्तेषामिन्द्रियैर्यदाहरणं स कामाहारः । तं कामाहारं प्रति चक्षुरादिभिरिन्द्रियै रूपादिविषयग्रहणं लक्षीकृत्य प्रतिनिवृत्तिः प्रत्याहार इति प्रोक्तः । बाह्यरूपादिविषयेष्वप्रवृत्तिर्मांसचक्षुरादीन्द्रियैर्मांसचक्षुर्विज्ञानादीनामध्यात्मनि शून्यतावलम्बनेनाकल्पितं सर्वभावदर्शनं शून्यप्रतिसेनादर्शनं कुमारिकया इवेति । प्रत्याहाराङ्गमुच्यत इत्यर्थः ॥

॥ द्वितीयमङ्गमाह पञ्चेत्यादि । पञ्चेत्युपलक्षणमुभयत्र पञ्चकामा इति सर्वे भावाः स्थिरचलात्मकाः पञ्चबुद्धप्रयोगत इति । सर्वबुद्धप्रयोगतः ।

स्वभावादेव सर्वभावाः सर्वबुद्धप्रयुक्ताः सर्वबुद्धमयाः। समासेनेति। तेषां सर्वबुद्धमयानां सर्वभावानां योगिप्रत्यात्मवेद्यत्र्यध्वत्रैधातुकप्रतिभासैकरूपेण कल्पनं विकल्पनं विकल्पविभ्रमापगतं प्रबन्धप्रवृत्तं यद्दर्शनं तद्ध्यानमुच्यते। एतदेवार्थं सर्वबुद्धमयं शान्तं सर्वकामप्रतिष्ठितमिति प्रतिनिर्देशेन वक्ष्यति। तच्च ध्यानं वितर्कश्चेत्यादिभेदेन पञ्चविधं भवति। गुह्यत्रयेत्यादि। कायवाक्चित्तात्मकं त्रैकालिकं त्रैधातुकं गुह्यत्रयं तस्य चैत्यस्थूलाकारेण त्रैधातुकप्रतिभासमात्रत्वेन सकृदुदयो.........[1]वगतिरवबोधो यः स गुह्यत्रयोदयः। स एव वितर्कः। विचारस्तत्प्रयोगत इति। तस्मिन्वितर्कविषये प्रभोगताऽऽभोगः। स्थावरजङ्गमघटपटादिविशेषेण भावग्रहणं विचारः। प्रीतिसङ्काशं विचारविषयेषु सर्वभावेषु चित्तारोपणहेतुभूतं सौमनस्यं सुखसङ्ग्रहमिति। आरोपितचित्तेभ्यः सर्वभावेभ्यः सुखसम्पत्तिः कायप्रस्रब्धिहेतुकः सुखसङ्ग्रहः। स्वचित्तमित्यादि। ज्ञानस्य चक्षुरादिषट्प्रवृत्तिविज्ञानस्य ज्ञेये रूपादिके धर्मधातुपर्यन्त उदयः। ज्ञानज्ञेयोदयः। तस्य क्षयः। चित्तस्य ग्राह्यग्राहकशून्यत्वलक्षणा चित्तैकाग्रता स्वचित्तमित्युक्तं तदेवंविधं चित्तं सर्वबुद्धमयं ग्राह्यादिविकल्पशमनाच्छान्तं त्रैधातुकप्रतिभासमात्रत्वेन शून्यतैकनिष्ठं सर्वकामप्रतिष्ठितम्। सर्वकामाः सर्वभावाः स्वाभिन्नप्रतिभासैकरूपेण प्रतिष्ठिताः स्थिता अत्रेति सर्वकामप्रतिष्ठितम्॥

॥ तृतीयमङ्गमाह। पञ्चज्ञानेत्यादि। पञ्चज्ञानान्यक्षोभ्यादिपञ्चबुद्धाः। ललनापञ्चमण्डलधर्मिणो विज्ञानादिपञ्चस्कन्धाः। तन्मयं श्वासं वामनासापुटे। इह पञ्चभूतशब्देन रसनापञ्चमण्डलधर्मिणः पृथिव्यादिपञ्चधातवः। तत्स्वभावं श्वासं पञ्चभूतस्वभावकम्। सव्यनासापुटे निश्चार्य पिण्डरूपेणेह पिण्डं सव्यावसव्यमण्डलात्मकत्वं मध्यमायामवधूत्यां प्राणवायोः। स च प्राणवायुर्निश्चार्य पिण्डरूपेण नासिकाग्रे। अत्र नासिकाशब्देन नाभिहृत्कण्ठललाटोष्णीषकमलकर्णिकोच्यते। तं प्राणवायुं निश्चार्य तस्मान्नासिकाया अग्रे कल्पयेद्भावयेत्। कर्णिकायाः कर्णिकामध्येन सव्यावसव्यकमलदलैः। अयमेव वामद-

1. Gap of one or two syllables in the Sanskrit text, which cannot be restored on the Tib.

क्षिणवाहिद्वयनिरोधेन केवलमध्यमावाहिप्राणवायुः पञ्चवर्णं महारत्नमित्युच्यते प्राणायाम इति वज्रजाप इति च मध्यमाभिन्नाङ्गेन जसव्यः। चतुर्थमाह। एवं मानसन्त्राणभूतत्वात्स्वमन्त्रं प्राणं हृदये कर्णिकात्कर्णिकामध्ये ध्यात्वा बिन्दुगतं बिन्दुस्थानं ललाटं तत्र न्यासेन्निरोधयेत्॥ निरुद्धं सेन्द्रियं रत्नं धारयेद्गमनागमनरहितं कुर्याद्धारणं स्मृतं धारणाङ्गमुक्तम्॥ निरोधवज्रेत्यादिसार्धश्लोकद्वयं प्रत्याहाराङ्गे द्रष्टव्यं गुरूपदेशाद्धारणारत्नपाठोऽस्य पुस्तकपाठनिरासार्थः। निरोध्यतेऽत्रेति निरोधः। निरोधश्चासौ वज्रश्च निरोधवज्रोऽवधूतीमार्गः। तत्रगते चित्ते प्राणवायौ निमित्तोद्ग्रहः प्रजायते। निमित्तानां धूमादीनामुद्ग्रहः प्रतिभासो जायत उत्पद्यते। प्रथमद्वितीयनिमित्तविलोमकथनं तु गुरुपराधीनत्वकथनार्थम्॥

स्थिरं निश्चलीभूतं धारणाङ्गेन महारत्नं कर्तृकमिति चण्डालीं नाभिचक्रादुत्थापयेत्। वज्रमार्गेण मध्यमा स्वधातुषूष्णीषचक्रे साप्युष्णीषकमलकर्णिकोत्थिता सती हंकारं स्रावयित्वा कायवाक्चित्तज्ञानस्वभावश्चतुर्बिन्दूनानन्दादिभेदेन कुलिशमणिकमलकर्णिकां नयेदिति धारणान्तरं स्वरसतश्चण्डाली ज्वलतीति गुरूपदेशः॥ ॥ पञ्चमाङ्गमाह। विभाव्येत्यादि। प्रत्याहारध्यानाङ्गाभ्यां यद्विभाव्य स्थिरीकृतं त्रैधातुकप्रतिभासात्मकं संवृतिसत्यमनुस्मृत्या तदाकारं तु संस्फरेत्। तदाकारं तु संवृतिसत्याकारं संस्फरेत्। समस्तनभस्तलव्यापकं पश्येत्सकलत्रैकालिकत्रिभुवनस्य दर्शनमनुस्मृतिरिति ज्ञेयमनुस्मृत्यङ्गज्ञेयमित्यर्थः।

॥ अत एवाह प्रतिभासस्तत्र जायते। इति त्रैधातुकस्य प्रतिभासः। तत्रेत्यनुस्मृत्यङ्गे जायते॥ ॥ षष्ठमङ्गमाह। प्रज्ञेत्यादि। प्रज्ञोपायसमापत्त्या निष्पन्दादिक्रमेण व्योमकमलोद्गमेऽक्षरसुखवशात्। ज्ञेयज्ञानैकलोलीभूतत्वेन वैमल्यावस्थायां सर्वभावान् प्रतिभासरूपान् स्थावरजङ्गमान् समासतः संक्षेपात्संहृत्योपसंहृत्य पिण्डयोगेन परमानास्रवमहासुखात्मकप्रभास्वरैकरूपेण। भक्षितसर्वलोहादिधातुरसैकरूपसिद्धरसरूपेणेव तस्य परमानास्रवमहासुखैकरसप्रभास्वरस्य मध्ये बिम्बं संवृतिसत्यात्मकं भावयेत्पश्येत्। अस्य प्रति-

निर्देशः । झटितीत्यादि । ज्ञानस्य सत्यद्वयाद्वैधीभावस्य झटितिनिष्पत्तिरधिगमः समाधिरिति समाध्यङ्गसंज्ञितमिति ॥ कालचक्रोत्तरे तु मञ्जुश्रीपादैरतिस्फुटमुक्तः षडङ्गयोगो यथा ।

प्रत्याहारादिषड्भिर्दशबलबलिना शून्यताभावनोक्ता
रात्रौ धूमादियोगः पुनरपि दिवसे व्योम्नि दीपादिकोऽपि ।
प्रत्याहारेण योगी गगनतलगतं पश्यति व्यध्वरूपम्
तत्र ध्यानेन चित्तं दृढमपि कुरुते बाह्यभावान्विहाय ॥

प्राणायामैस्तमिन्यां(?) शशिरविरहितं वाहयेत्प्राणवातम्
निःश्वासोच्छ्वासहीनं पुनरपि कुरुते धारणाङ्गेन बिन्दौ ।
खेऽनुस्मृत्या स्वबिम्बाच्छशिन इव महारश्मयो निश्चरन्ति
वज्राच्छुक्रं समाध्या व्रजति शिरसि वैमल्यसौख्यप्रपूर्णम् ॥

इति ॥ ॥ इदानीं प्रत्याहारादिफलमाह । प्रत्याहारं समापद्येत्यादिश्लोकत्रयेण प्रत्याहारं समापद्येति । धूमादिदर्शनिमित्तानुपूर्वेण त्रैधातुकबिम्बदर्शनं प्रत्याहाराङ्गेन स्थिरीकृत्य यदा च बिम्बदर्शनं स्थिरीकृतं भवति प्रत्याहारेण तदा योगी सर्वमन्त्रैरधिष्ठ्यते वचसा वरदानादिकं ददाति । ध्यानज्ञानं समापद्येति ध्यानाङ्गेन बिम्बे स्थिरचित्तो यदाऽनिमिषचक्षुर्भवति । तदा दिव्यचक्षुर्भवति । एवं दिव्यश्रोत्रादिको भवतीति ॥ पञ्चाभिज्ञात्वमाप्नुयादिति ॥ प्राणयामेनेति । यदा शशिरविमार्गरहितो योगी भवति सदा मध्यमावाहकस्तदा प्राणयामेन शुद्धः सन्निरीक्ष्यते बोधिसत्त्वैः प्रशस्यते च ॥ धारणाया बलादिति नियतं शून्यताबिम्बं ग्राह्यं वज्रसत्त्वो ग्राहकचित्तं समाविशेत् । धारणाया बलेन प्राणस्य गतागतक्षयेणैकलोलीभवति । अनुस्मृतिसमायोगादिति । अनुस्मृतिसमायोगो बिम्बालिङ्गनं चित्तस्य सर्वविकल्परहितत्वं यदा तदा विमलं प्रभामण्डलं जायते । रोमकूपात्स्फरेत्पश्चरश्मयो निश्चरन्ति । समाधिवशितामात्रादिति ॥ इह ग्राह्यग्राहकचित्तयोरेकत्वेन यदक्षरं सुखं भवति तत्सुखं समाधिरित्युच्यते । तस्य वशितामात्रं तस्मादचलनं ततो निरावरणत्वं भवेत् । परमाक्षरज्ञानलक्षणप्रभास्वरज्ञानवशितामात्रादेव निरावरणता भवेदित्यर्थः । तदुत्तरकालं सत्यद्वयाद्वैधीभावलक्षणभूतनयात्मकसमाध्यव-

गमः। फालभूतो भवतीति क्रमः। श्रीकालचक्रेऽप्युक्तो विमलप्रभायां विस्तरेण व्याख्यातश्च तद्यथा।

प्रत्याहारो जिनेन्द्रो भवति दशविधो ध्यानमक्षोभ्य एव
प्राणायामश्च खड्गी पुनरपि दशधा धारणा रत्नपाणिः।
डोम्ब्यां चानुस्मृतिः स्यादपि कमलधरः श्रीसमाधिश्च चक्री
एकैकः पञ्चभेदैः पुनरपि च यतो भिद्यते ह्यादिकाद्यैः॥

इति। अस्यायमर्थः। प्रत्याहारादिकर्मणि जिनेन्द्र इति ज्ञानस्कन्धः। स च निमित्तभेदेन दशविधो धूममरीचीखद्योतदीपज्वालाचन्द्रादित्यराहुकलाबिन्दुदर्शनभेदेनाकल्पितो ज्ञानस्कन्धः। ध्यानमक्षोभ्य एव दशविधो विज्ञानस्कन्धो विषयविषयिणां दशानामेकत्वं विश्वबिम्बे ध्यानमिति। प्राणयामश्च दशविधः खड्गीति संस्कारस्कन्धः। वामदक्षिणमण्डलैकलोलीभूतत्वादिति। पुनरपि दशधा धारणा रत्नपाणिरिति वेदनास्कन्धः। प्राणस्य धारणा नाभिहृत्कण्ठललाटोष्णीषकमले गतागतभेदेन दशविधेति। डोम्ब्यां मध्यनाड्यां दशकामावस्थाभेदत इति चिन्ताकाङ्क्षाज्वरोऽङ्गे वरमुखकमले शुषिरान्ता प्रवृत्तिः। कस्योन्मादश्च घूर्णा प्रभवति मनसो विभ्रमस्तीव्रमूर्च्छाधूमाद्या वज्रिणस्ताः प्रकटदशविधाः प्राणिनोऽङ्गेष्ववस्थालोके ता मन्मथस्य प्रकटितनियता को जिनः कश्च काम इति दश। श्रीसमाधिश्च चक्रीति वैरोचनो दशविधः समाधिः। दशवायूनां निरोधत इति। एवं भगवानप्रतिष्ठितनिर्वाणोऽऽवाहो वायूनां यत इत्यर्थः। इदानीं प्रत्याहारादिलक्षणमुच्यते।

प्रत्याहारो दशानां विषयविषयिणामप्रवृत्तिः शरीरे
प्रज्ञा तर्को विचारो रतिरचलसुखं ध्यानमप्येकचित्तम्।
प्राणयामो द्विमार्गस्खलनमपि भवेन्मध्यमे प्राणवेशो
बिन्दौ प्राणप्रवेशो ह्युभयगतिहतो धारणा चैकचित्तम्॥

चण्डाल्यालोकनं यद्भवति खलु तनौ चाम्बरेऽनुस्मृतिः स्यात्
प्रज्ञोपायात्मकेनाक्षरणसुखवशाज्ज्ञानबिम्बे समाधिः।
एतन्मुद्रादिभेदैस्त्रिविधमपि भवेत्साधनं विश्वभर्तुः
तिस्रो मुद्रास्त्रिमात्रास्त्रिविधगतिवशात्कर्मसङ्कल्पदेव्याः॥

इह प्रत्याहारो नाम शरीरे विषयविषयिणां दशानां सम्बन्धेनाप्रवृत्तिर्विज्ञानस्य शून्यताबिम्बे विषयेषु प्रवृत्तिरन्यैश्चक्षुरादिभिः पञ्चविधैरिति । तथा तस्मिन्नेव बिम्बे प्रज्ञेत्यालोकनम् । तर्क इति भावग्रहणम् । विचार इति तस्य निश्चयार्थः । रतिरिति बिम्बासक्तिः । अचलसुखमिति बिम्बेन सह चित्तस्यैकीकरणम् । एवं ग्राह्यग्राहकभेदेन ध्यानं दशविधम् । इह प्राणयामो नाम द्विमार्ग इति वामदक्षिणमार्गस्खलनं निरोधो मध्यमे मार्गे प्रवेशः स च दशविधो दशमण्डलनिरोधतः । इह बिन्दाविति । ललाटे प्राणप्रवेशः । उभयगतिहृत इति गमनागमनरहितम् । धारणा प्राणस्य ललाट एकचित्तं नाम । चण्डाल्यालोकनं यत् त्रिभवस्याम्बरे सानुस्मृतिर्दशविधा पूर्वोक्ता। प्रज्ञोपायात्मकेनेति । ज्ञेयज्ञानैकलोलीभूतत्वेनाक्षरणसुखवशाज्ज्ञानबिम्बे समाधिश्चेति सापि दशविधा प्राणादिनामभवत इति । एवं षडङ्गयोगः साधनम् । एतन्मुद्रादिभेदैस्त्रिविधमपि भवेत्साधनं विश्वभर्तुः कालचक्रस्य तिस्रो मुद्रास्त्रिमात्रास्त्रिविधगतिवशादिति । बोधिचित्तस्य क्षरगतिर्मृदुमात्रा ॥ स्पन्दगतिर्मध्यमात्रा । निष्पन्दगतिरधिमात्रेति । एवं कर्ममुद्राक्षरसुखदायिका । ज्ञानमुद्रा स्पन्दसुखदायिका । महामुद्रा निष्पन्दसुखदायिका । एवं त्रिमुद्राभावना षडङ्गयोगेन भगवतोक्ता । इति षडङ्गयोगो भावनीयो योगिना बुद्धत्वायेति ॥ इदानीं शून्यताबिम्बसाधनाय दृष्टिरुच्यते ।

सेवायामादियोगो नभसि दशविधश्चक्रिणः क्रोधदृष्ट्या
दृष्ट्या विघ्नान्तकस्यामृतपथगतया चोपसाध्ये षडङ्गः ।
प्रज्ञासृष्टेन्दुबिन्दोरपि कुलिशमणौ त्र्यक्षरः साधने स्यात्
सौख्यानष्टैकशान्तः सहज इह महासाधने ज्ञानयोगः ॥

इह सेवेत्यादि । धूमादिनिमित्तभावना सेवा तस्यां सेवायामादियोगो धूमादिनिमित्तग्रहणं चित्तस्येति। स च दशविधो धूमादिना सार्धं सम्प्रत्ययो भवति तेन दशविधः । स च चक्रिण इत्युष्णीषस्य क्रोधदृष्ट्येत्यूर्ध्वदृष्ट्याऽनिमिषनिमित्तं भवति । रात्रियोगे चतुर्विधम् । दिवायोगे षड्विधम् । ततो बिम्बम् । एवं बिम्बपर्यन्तं सेवाङ्गं भवति प्रत्याहारेण ध्यानेनेति । दृष्ट्या विघ्नान्तकस्येति । विघ्नान्तको

ऽमृतकुण्डलीति तस्य दृष्टिरमृतस्थानगता ललाटगता। तया दृष्ट्या विघ्नान्तकस्यामृतपथगतया चोपसाध्ये षडङ्गः। चकारात्प्राणायामो धारणा कर्तव्या प्राणस्य बिम्बे दृष्टे सतीत्युपसाधनम्। प्रज्ञासृष्टेन्दुबिन्दोरिति। इह प्रज्ञारागेन सृष्टश्चासाविन्दुबिन्दुश्च सृष्टेन्दुबिन्दुस्तस्य प्रज्ञासृष्टबोधिचित्तबिन्दोरपि कुलिशमणौ गतस्य यद्व्यक्षरो योगो भवति गुह्ये नाभौ हृदये स साधने स्यादिति साधनाङ्गे तृतीये भवति। एवं साधनाङ्गं कर्तव्यम्। सौख्यानष्टैकशान्त इति। इति सौख्येनानष्टेन बोधिचित्तस्य य एकक्षणः स शान्तः। इत्युच्यते। सहज इति महासाधने ज्ञानयोग इति। चित्तस्याक्षरसुखेन सहैकत्वमिति। महासाधनाङ्गं चतुर्थमिति। एवं ज्ञानसाधने चतुरङ्गम्। देवतासाधन उत्पत्तिक्रमेण पूर्वोक्तम्। लौकिकलोकोत्तरत्वसाधनक्रमेण॥ इदानीमस्य स्वचित्तस्याभासे प्रवेश उच्यते।

आकाशासक्तचित्तैरनिमिषनयनैर्वज्रमार्गप्रविष्टैः
शून्याद्धूमो मरीचिः प्रकटविमलखद्योत एव प्रदीपः।
ज्वालाचन्द्रार्कवज्राण्यपि परमकला दृश्यते बिन्दुकश्च
तन्मध्ये बुद्धबिम्बं विषयविरहितानेकसम्भोगकायम्॥

इह मन्त्रयाने पारमितायाने च द्विधा योगाभ्यासः। आकाशे योगाभ्यासोऽभ्यवकाशे च य आकाशे योगमाप्स्यते स रात्रौ निच्छिद्रगृहेऽन्धकार आकाशासक्तचित्तः सर्वचिन्तापरिहारेण शून्य एकाग्रमनो भूत्वा दिनमेकं परीक्षयेद्धूमादिकं निमित्तं पश्यति। अनिमिषनयनो वज्रमार्गं प्रविष्ट इति। इह मध्यमाप्राणप्रविष्टः शून्यादेवाकाशासक्तचित्तैरनिमिषनयनैर्वज्रमार्गप्रविष्टैः शून्याद्धूमो मरीचिः प्रकटविमलखद्योत एव प्रदीप इति निशायोगेन पश्यति। ततो निरभ्रं गगनं पश्यति ततो गगनात्पुनर्दिवायोगेन गगनोद्भवः स्वयम्भूः प्रज्ञाज्ञानानलो महानिति ज्वाला दृश्यते निरभ्रे गगने। एवं वैरोचनो महादीप्तिर्ज्ञानज्योतिर्विरोचनश्चन्द्राभासः। जगत्प्रदीपः सूर्यः। ज्ञानोल्को वज्रराहुः। महातेजाः प्रभास्वरो विद्युत्परमकमल इति। विद्याराजोग्रमन्त्रेशो बिन्दुक इति दशधानिमित्तं समाजादौ रात्रियोगेन। नामसङ्गीत्यां दिवायोगेन सन्ध्याभाषान्तरेण भगवतोक्तम्। ततो मन्त्रराजा महार्थकृदिति सर्वाकारं घटपटादिबिम्बदर्शनमिति। तन्मध्ये बिन्दुमध्ये बुद्धबिम्बं विषयविरहितं द्रष्टव्याभावात्कल्पनाभावाच्चा-

नेकसम्भोगकायम् । ततो बिम्बयोगेऽनाहतध्वनिर्यः स श्रूयते । एवं निर्माणकायो रूपावभासतः । शब्दावभासतः सम्भोगकाय इत्यर्थः ।

आकाशं स्तब्धदृष्ट्या जलधररहितं योगिनाऽऽलोकनीयं
यावद्वै कृष्णरेखा स्फुरदमलकरा दृश्यते कालनाड्याम् ।
तस्यां सर्वज्ञबिम्बं पयसि रविरिवानाविलं विश्ववर्णं
सर्वाकारं स्वचित्तं विषयविरहितं नापरं चित्तमेव ॥

अत्र दिवायोग आकाशं स्तब्धदृष्ट्या जलधररहितं योगिनाऽऽलोकनीयं पूर्वाह्णेऽपराह्णे च रवेः पृष्ठं दत्त्वाऽन्यथा रविरश्मिभिस्तिमिरं भवति तेन तद्बाधात्प्रतिदिनमवलोकनीयं यावद्बिन्दुमध्ये कृष्णरेखा-वालप्रमाणा स्फुरदमलकरा दृश्यते कालनाड्यामवधूत्यामन्तर्भूतं तस्यां सर्वज्ञबिम्बं त्रैधातुकमशेषं पयसि रविरिवानाविलं विश्ववर्णं सर्वाकारं स्वचित्तं विषयविरहितं नापरं चित्तमेव परचित्तं न भवति परचित्तज्ञानाभावतः । तत्र प्रथमं स्वचित्ताभासो मांसचक्षुषा तथागतस्य दृश्यते दिव्यादिचक्षुषा परचित्तज्ञानं दृश्यते तेन धर्मसंग्रह उक्तानि पञ्चचक्षूंषि भगवत इति । एवं ज्ञानक्रमान्मांसचक्षुर्दिव्यचक्षुर्बुद्धचक्षुः प्रज्ञाचक्षुर्ज्ञानचक्षुर्भावनाबलेन भविष्यति । ततोऽदृष्टं न किञ्चिदस्ति सर्वज्ञस्येति ॥ ॥ एवंविधश्च षडङ्गयोग आर्यवज्रपाणि-पादैरप्युक्तः । इह प्रत्याहारो बाह्यरूपादिविषयेष्वप्रवृत्तिः चक्षुरादीन्द्रियैश्चक्षुर्विज्ञानादीनामध्यात्मनि विषयेषु प्रवृत्तिर्दिव्यचक्षुरादीन्द्रियैर्दिव्यचक्षुर्विज्ञानादीनामिति । अध्यात्मनि शून्यतालम्बनेनाकल्पितं सर्वभावदर्शनं शून्ये प्रतिसेनादर्शनकुमारिकायातेवेति प्रत्याहाराङ्गं त्रैधातुकबुद्धबिम्बदर्शनादिति । ततो ध्यानं नाम शून्येषु सर्वधर्मेषु दृष्टेषु सत्सु प्रज्ञा नाम तेषु चित्तप्रवृत्तिः । वितर्को नाम भावग्रहणं चित्तस्य । विचारो नाम भावग्रहणप्रतिपत्तिः । रतिर्नाम सर्वभावेषु चित्तारोपणम् । अचलसुखं नाम सर्वभावेभ्यः सुखसम्पत्तिः । एवं पञ्चधा ध्यानाङ्गम् । ततः प्राणायामो नाम ललनारसनावामदक्षिण-मार्गनिरोधः । अवधूतीमध्यमार्गे प्राणवायोः सदा प्रवृत्तिरिति । पूरक-कुम्भकरेचकयोगेनावधूत्यां ओंकारेण श्वासं हूंकारेण निरोधं आः कारेण निःश्वासम् । चन्द्रसूर्यराहुस्वभावेन कुरुते योगीति प्राणयामा-

ङ्गम्। ततो धारणा नाम प्राणस्य महेन्द्रवारुणाग्निवायुमण्डले नाभौ हृदि कण्ठे ललाटे प्रवेशो बाह्योऽनिर्गमः। बिन्दौ प्राणप्रवेशनमिति धारणाङ्गम्। ततोऽनुस्मृतिर्नाम स्वेष्टदेवतादर्शनं प्रतिबिम्बाकारं विकल्परहितम्। तस्मादनेकरश्मिस्फुरद्रूपं प्रभामण्डलम्। ततोऽनेकाकारस्फुरद्रूपं त्रैधातुकस्फरणमित्यनुस्मृत्यङ्गम्। ततः समाधिर्नामेष्टदेवतानुरागाद्यदक्षरसुखप्राप्तिस्तस्यामेकीकरणं चित्तस्य ग्राह्यग्राहकरहितं चित्तं समाध्यङ्गमुच्यते तथागतैः। इह षडङ्गस्य पुनरादिभावनोपदेशस्तन्त्रान्तरेषूक्तः॥

॥ इह श्रीसमाजोत्तरे सेवोपसाधनं साधनं महासाधनं चेति। तदेव भगवानाह।

सेवाकाले महोष्णीषबिम्बं विभाव्य यत्नतः।
उपसाधनकाले तु बिम्बं चामृतकुण्डलीम्॥
साधने देवताबिम्बं भावयेद्योगतत्परः।
महासाधनकाले तु बिम्बं बुद्धाधिपं विभुम्॥

इति। अत्र सन्ध्याभाषान्तरेणोष्णीषबिम्बं बुद्धबिम्बं त्रैधातुकमशेषतः। आकाशे धर्मोदये चित्तवज्रं प्रतिष्ठाप्य सेवाकाले प्रथमकाले प्रत्याहारेण भावयेद् ध्यानाङ्गेन स्थिरीकुर्यादित्यत्र भगवतः प्रतिज्ञा।

सर्वचिन्तां परित्यज्य दिनमेकं परीक्षयेत्।
यदि न स्यात्प्रत्ययस्तत्र तदा मे तन्मृषा वचः॥

इति। अत्र प्रत्ययो धूमादिकं निमित्तं नान्यन्मन्त्रादिकं दिनेनैकेन साध्यते येन प्रत्ययो भविष्यति। मन्त्रिणां ततोऽस्तिनास्तिबुद्धिं परित्यज्य निराश्रयां कृत्वा शून्ये गम्भीरो निरालम्बः प्रत्ययो भवति स प्रत्ययो धूमादिको भाव्यते योगिनेति तथागतनियमः। तथा करणैर्बन्धसंयोगैः साधयेद्भुवनत्रयमिति। बुद्धबिम्बं भुवनत्रयं साधयेत्करणैश्चक्षुरादिभिः स एवोपदेशो गुरुवक्त्रेणावगन्तव्यः। तत्र गुरूपदेशेनाकाशे प्रथमं योगी धूमं पश्यति न मरीचिकामित्यनुभवतो ज्ञेयम्। ततो मरीचिकाः। पश्चात्तदेव धूमादिकं कल्पनारहितं प्रतिसेनावदिति। एवं प्रथमं धूमनिमित्तं द्वितीयं मरीचिकानिमित्तं तृतीयं खद्योतनिमित्तं चतुर्थं प्रदीपनिमित्तं पञ्चमं निरभ्रगगनसन्निभं निमित्तमिति

समाजोत्तरे । डाकिनीवज्रपञ्जरेऽपि भगवतोक्तम् । तदुपरि भगवानाह । डाकिनीवज्रपञ्जरे सर्वज्ञहेतुकं तद्धि सिद्धिनिकटे प्रवर्तकम् । पश्चान्मायोपमाकारं स्वप्नाकारं क्षणात्क्षणमित्यादि । अतो भगवतो वचनादादौ धूमादिनिमित्तभावनाप्रत्ययो भवति केचित्सिद्धिकाले वदिष्यन्ति ते सर्वे भगवतः प्रतिज्ञाभङ्गकारिणः । सर्वाचिन्तां परित्यज्य दिनमेकं परीक्षयेत्प्रत्ययमिति भगवतो वचनविहेठकाः । यत्सिद्धिकाले लौकिकं धूमादिकं निमित्तं तन्मायास्वप्नोपमं न भवति । साक्षादिह धूमज्वालादिदहनक्रियासामर्थ्यात्तथा कुङ्कुमपुष्परत्नसुवर्णादिवृष्टिरपि । अतः षडङ्गयोगाद्धूमादिकं निमित्तं भवतीति । तथा डाकिनीवज्रपञ्जरे भगवानाह ।

षडङ्गं भावयेत्तस्मात्स्वाधिष्ठानसमं पुनः ।
पश्चात्स्वं लक्षयेच्चिह्नमनुलोमविधिक्रमैः ॥

अत्र स्वाधिष्ठानं नाम संवृतेः सत्यदर्शनं प्रत्याहारेण चिह्नं नाम मेघधूमादिवत्प्रतिभासः । स च प्रथमं दृश्यते प्रदीपपर्यन्तम् । तत आकाशं निरभ्रं निर्मलमिति । तन्त्रेऽप्यपरं ज्वालादिबिन्दुपर्यन्तं षडन्यनिमित्तं मायाजाले समाधिपटले प्रोक्तं भगवता । तद्यथा ।

गगनोद्भवः स्वयम्भूः प्रज्ञाज्ञानानलो महान् ।
वैरोचनो महादीप्तिर्ज्ञानज्योतिर्विरोचनः ॥
जगत्प्रदीपो ज्ञानोल्को महातेजाः प्रभास्वरः ।
विद्याराजोग्रमन्त्रेशो मन्त्रराजो महार्थकृत् ॥

इति । गाथाद्वयेन मायाजालेऽपरनिमित्तं भगवतोक्तं सन्ध्याभाषान्तरेण पूर्वोक्तान्निरभ्रगगनाद्भवति प्रतिभासो यः स गगनोद्भवः स्वयम्भूः सर्वविकल्परहितचित्तादिति । अत्र प्रज्ञाज्ञानानल इति ज्वालाप्रतिभासः । वैरोचनो महादीप्तिरिति चन्द्रप्रतिभासः । स एव ज्ञानज्योतिर्विरोचन इति । जगत्प्रदीप इति सूर्यप्रतिभासः । ज्ञानोल्का इति राहुप्रतिभासः । महातेजाः प्रभास्वर इति विद्युत्प्रतिभासः । विद्याराजोग्रमन्त्रेश इति बिन्दुप्रतिभासो नीलवर्णचन्द्रमण्डलाकार इति । मन्त्रराजो महार्थकृदिति सर्वाकारत्रैधातुकभावप्रतिभासो मायास्वप्नप्रतिभासेन तुल्यो दृश्यते योगिना प्रत्याहारेणेति चक्षुरादी-

न्द्रियकरणेन । ततः प्राणयामबन्धेनैभिः(?) करणैर्बन्धसंयोगैः साधयेद्भुवनत्रयं कामरूपारूप्यलक्षणं स्थिरचलस्वभावात्मकमिति ॥ तथा डाकिनीवज्रपञ्जरे भगवानाह ।

सिध्यत्यशेषनिःशेषं त्रैधातुकं चराचरम् ।
लोकधातुषु सर्वेषु यावन्तो वज्रदेहिनः ॥

इति षडङ्गयोगभावनेनेति भगवतो नियमः । तथा श्रीसमाजे भगवानाह ।

अभावे भावनाभावो भावना नैव भावना ।
इति भावो न भावः स्याद्भावना नोपलभ्यते ॥

इति । अभावे निरभ्रगगने भावना प्रत्याहारः । स एवाभावे भावनाभाव इति । भावना नैव भावनेति । इति प्रत्याहारभावनायाऽभावे निरभ्रगगने सा भावना । नैव भावनेति । विकल्पभावनारहितत्वादिति भावो यः प्रत्याहारेण दृष्टः स भावो न भावः स्याद्विकल्पातीतानागतवर्तमानभावाभावदर्शनादिति । अतो विकल्पभावना नोपलभ्यते प्रत्याहारभावनायामिति भगवतो वाक्यम् । इयं च भावना प्रज्ञापारमितायामपि भगवतोक्ता । तद्यथा । अथ खलु शक्रो देवानामिन्द्र आयुष्मन्तं सुभूतिमेतदवोचद्य आर्यसुभूतेऽत्र प्रज्ञापारमितायां योगमाप्स्यते क्व स योगमाप्स्यते । सुभूतिराह । आकाशे स कौशिक योगमाप्स्यते । यः प्रज्ञापारमितायां योगमाप्स्यतेऽभ्यवकाशे स कौशिको योगमाप्तुकामो यः प्रज्ञापारमितायां शिक्षितव्यं मंस्यत इति ॥ महामुद्राभावना प्रतिसेनामायातुल्या निरभ्रे गगने भगवतोक्तेति । एवं प्रत्याहारेण ध्यानेन सेवाङ्गमुच्यते । ततोऽमृतकुण्डलीबिम्बसंज्ञया सन्ध्याभाषान्तरेण वायुरित्युक्तम् । स च पञ्चप्रकारः । तथा च समाजोत्तरे भगवानाह ।

पञ्चरत्नमयं श्वासं पञ्चबुद्धैरधिष्ठितम् ।
निश्चार्य पिण्डरूपेण नासिकाग्रे विभावयेत् ॥

इति । इह पञ्चरत्नशब्देन रसना पञ्चमण्डलधर्मिणी पृथिव्यादिपञ्चधातवस्तन्मयं श्वासं पञ्चरत्नमयमिति सव्यनासापुटे । तथा पञ्चबुद्धा ललना पञ्चमण्डलधर्मिणो विज्ञानादिपञ्चस्कन्धाः । तैरधिष्ठितं

श्वासं वामनासापुट इति। निश्चार्य पिण्डरूपेणेति। इह पिण्डं सव्यावसव्यमण्डलानात्मकत्वं मध्यमायामवधूत्यां प्राणवायोरिति। तं च प्राणवायुं निश्चार्य पिण्डरूपेण नासिकाग्रे विभावयेत्। अत्र नासिकाशब्देन नाभिहृत्कण्ठललाटोष्णीषकमलकर्णिकोच्यते। तस्याग्रे भावयेत्। नासाग्रे भावयेत्। कर्णिकात्कर्णिकामध्ये न सव्यावसव्यकमलदल इति। एवं बिन्दुस्थाने पिण्डरूपेण निरोधितः प्राणः। तेनैव तस्य धारणोच्यते। एवमङ्गद्वयेनोपसाधनममृतकुण्डलीबिम्बेनेति। तदेवोपसाधनं वज्रजाप इत्युच्यते। मध्यमाभिन्नाङ्गेन जप्तव्यमिति। अभिन्नाङ्गेन करणेनेति। प्राणस्य न वामदक्षिणाभ्यां प्रचार इति। उष्णीषबिम्बे दृष्टे सति पश्चात्प्राणायामं कुर्यान्मन्त्रीति। गुरूपदेशः सन्ध्याभाषान्तरेणावगन्तव्य इति। प्राणायामधारणोपसाधनमुच्यते। ततः साधने देवताबिम्बमिति। इह धारणाबलेन नाभिस्थां चण्डालीं ज्वलितां पश्यति योगी सर्वावरणरहितां प्रतिसेनोपमां महामुद्रामनन्तबुद्धरश्मिमेघान् स्फारयन्तीं प्रभामण्डलविराजिताम्। तामनुस्मृतिं साधनमाह। धारणान्ते चण्डालीं योगी भावयेदिति नियमः। ततस्तस्या ज्ञानार्चिषा स्कन्धधात्वायतनादीनि दग्धान्येकलोलीभवन्ति। वामदक्षिणनाडीगतानि विज्ञानादीनि पृथिव्यादीनि च मण्डलस्वभावानि ललाटे चन्द्रमण्डले प्रविष्टानि। ततश्चण्डाल्या ज्ञानार्चिषा चन्द्रे द्रुते सति यद्बोधिचित्तं बिन्दुरूपेणाधोगतं कण्ठे हृदि नाभौ गुह्यकमल आनन्दपरमविरमस्वभावेन। ततो वज्रमणिं यावत्सहजानन्दस्वभावेनेति। अथवा विचित्रविपाकविमर्दविलक्षणस्वभावेनेत्येवं षोडशकलापूर्णं मण्यन्तर्गतं यदा सुखं ददाति भावनाबलेन * * * सदृशमिति दृष्टान्तमात्रं स्वरूपतो द्वीन्द्रियजं * * * कोटीसहस्रतमीमपि कलां नार्हति परमाक्षरसुखस्येति। इहाक्षरसुखावस्था या सहजानन्दरूपिणी सावस्था काप्यविज्ञेया बालयोगिनाम्। बोधिसत्त्वैः शून्यता समाधिरित्युच्यते। न पुनर्लौकिकरूढ्यैव नास्तिक्यार्थानुयायिनी। एवं षडङ्गयोगेन बुद्धत्वं योगिनां सिध्यतीति।

। सेवा पञ्चामृताद्यैर्जलनिधिकुलिशैर्मन्त्रजापादिभिश्च प्रत्याहारादिभिः स्यात्कुलिशकमलजेनामृतेनोपसिद्धिः। आनन्दाद्यैस्त्रिवज्राब्जसमरसगतभावनासाधनं स्यात्प्रज्ञासङ्गेऽच्युतं सम्भवति खलु

महासाधनं सूक्ष्मयोगात् ॥ इहादिकर्मिकेण प्रथमं सेवा कर्तव्या साधनविधिना सेवा पञ्चामृताद्यैरिति । बाह्ये पञ्चामृतं विडादिकमाद्यशब्देन गोकादयस्तैर्भक्षितैः सेवा देवतातोषनार्थम् । अध्यात्मनि पञ्चामृतानि पञ्चस्कन्धाः । आद्यशब्देन पञ्चेन्द्रियाणि पञ्चप्रदीपाः । तेषां निरपेक्षता सेवा शरीरद्रव्यतृष्णापरित्यागस्तया सेवया देवता वरदा भवन्ति न गूहादिना भक्षितेनेति । जलनिधिकुलिशैरिति । कायभोगनिरपेक्षता । वाग्भोगनिरपेक्षता । चित्तभोगनिरपेक्षता । च्यवनसुखनिरपेक्षता सेवा । कायवाक्चित्तानां ब्रह्मचर्यं संयम इत्यर्थः । अनया देवता वरदा भवन्ति । न भवभोगस्पृहयेति । मन्त्रजापादिभिश्चेति । इह मन्त्रजापो नाम प्राणसंयमः । आदिशब्देन रेचकपूरककुम्भकयोगः सदा सेवा तया देवता वरदा भवन्ति । देवता न प्राणेन यन्त्रितेन वाग्जल्पितेनेति नीतार्थः । नेयार्थेन पुनरक्षमालादिना जापादिकं कर्तव्यं सामान्यसिद्ध्यर्थम् । इदानीमुपसाधनमुच्यते । प्रत्याहार इत्यादि । इह संसारिणामाहारश्चक्षुरादीन्द्रियै रूपादिविषयग्रहणं तत्परित्यागः प्रत्याहार इत्युच्यते । शून्यताबिम्बेऽन्यैश्चक्षुरादिभिर्मांसाद्यैरन्यरूपादिविषयग्रहणमुपसाधनं तथा ध्यानं प्राणायामश्च धारणा च कुलिशकमलजेनामृतेनाच्युतेनोपसाधनं नीतार्थेन बाह्ये देवतोत्सर्जनेन नेयार्थेनेत्युपसाधनसिद्धिः ॥ इदानीं साधनमुच्यते । आनन्देत्यादि । इहानन्दे त्रिवज्राः कायवाक्चित्तबिन्दवोऽब्जसमरसगता भावना साधनं स्याद्हृन्नाभिगुह्ये बिन्दूनां स्थितिरित्यर्थः । एवं साधनम् । ततो महासाधनं प्रज्ञासङ्गेऽच्युतं सुखं सम्भवति यदा तदा खलु महासाधनं सूक्ष्मयोगमिति सुषुम्नानाडिकोर्ध्वे शुक्रसंयोगान्महासाधनमित्युच्यते नीतार्थेन । नेयार्थेन पुनः प्रज्ञाधर्मोदयनासिकाग्रे सर्षपादिकमिति नियम एवं महासाधनं भवति । इदानीं मृद्वादिभेदेन सेवादिकमुच्यते ॥ आदौ वै शून्यताबोधिरपि खलु ततः सङ्ग्रहश्चन्द्रबिन्दोर्बिम्बोत्पत्तिश्च तस्मात्प्रवररसकुलैरक्षरन्यास एव । एषा सामान्यसेवा जलनिधिकुलिशैः साधनं मध्यमं चात्रोपायश्चतुर्धा भवति मृदुदृढः साधनाङ्गं तथैव ॥ इहोत्पत्तिक्रमे प्रथमं शून्यताबोधिरिति । प्राणिनां मरणान्ते स्कन्धपरित्यागादुत्पत्त्यंशिकस्कन्धग्रहणात् । यदन्तरालं शून्यतालक्षणमेकं त्रिभुवनदर्शनं तच्छून्यमित्युच्यते खलु निश्चितम् । ततः क्षणात्प-

श्चात्सङ्ग्रहश्चन्द्रबिन्दोरिति । इहालयविज्ञानस्य मातृगर्भे शुक्रबिन्दूनां ग्रहणं नाम सङ्ग्रहः । ततः शुक्रादिग्रहणात्तस्माद्बिम्बोत्पत्तिर्नाम सप्तमासैर्गर्भनिष्पत्तिः कायनिष्पत्तिरित्यर्थः । ततः प्रवररसकुलैरिति पञ्चस्कन्धैश्चक्षुरादीनामक्षरन्यासो रूपादिविषयप्रवृत्तिरिति । एवं देवतासाधनेऽपि कल्पनामेकां भावयेदादिकर्मिकः । एषा सामान्यसेवा जलनिधिकुलिशैरिति कायवाक्चित्तज्ञानवज्रनिष्पन्नैः साधनं मध्यमं च प्राणनिष्पत्तिः । अत्रोपायश्चतुर्धा भवति । सेवाङ्ग उपसाधनाङ्गे मृदुदृढसाधनाङ्गे तथैव षोडशवर्षावधेरिति नियमः । अत्र मृदुर्जातबालो दन्तोत्थानात्तु मध्यबालः दन्तपातात्कुमारः पुनर्दन्तोत्थानात्षोडशवर्षोर्ध्वं प्रौढः । पुत्रदुहितृजनकत्वादिति । एवं सर्वदेवतानां चतुर्विधमङ्गं योगिना भावनीयमिति लौकिकसत्यनियमः । इदानीं परमार्थसत्येन बुद्धबिम्बनिष्पत्तिरुच्यते । इह प्रथमं शून्यताबोधिरिति । अन्धकारे न किञ्चिदपि चिन्तनीयम् । ततः सङ्ग्रहश्चन्द्रबिन्दोरिति । बिन्दुपर्यन्तं धूमादिनिमित्तग्रहणमिति । बिम्बोत्पत्तिश्च तस्मादिति तस्माद्बिन्दोर्विश्वदर्शनं बिम्बोत्पत्तिरिति प्रवररसकुलैरिति । निरावरणैः षट्कुलैरक्षरन्यास इति । प्रादेशिकस्कन्धधात्वायतनादीनां निरोधः । ततो मृद्वादिभेदो भूमिलाभेन भवति यावन्न द्वादशभूमीश्वरो भवति । ततो द्वादशाकारसत्यार्थः षोडशाकारतत्त्वविद्विंशत्याकारसम्बोधिविबुद्धः सर्ववित्परः । इति नियमः । इदानीं प्रत्याहारादिफलमुच्यते ॥

प्रत्याहारेण योगी विषयविरहितोऽधिष्ठ्यते सर्वमन्त्रैः
पञ्चाभिज्ञानलाभी भवति नरपते ध्यानयोगेन शुद्धः ।
प्राणायामेन शुद्धः शशिरविरहितः पूज्यते बोधिसत्त्वै-
र्मारक्लेशादिनाशं विशति दशबलं धारणाया बलेन ॥
संशुद्धोऽनुस्मृतेः स्याद्विमलमपि च भामण्डलं ज्ञानबिम्बात्
तस्माच्छुद्धः समाधौ कतिपयदिवसैः सिध्यति ज्ञानदेहः ।
प्रत्याहारादिभिर्वै यदि भवति न सा मन्त्रिणामिष्टसिद्धि-
र्नादाभ्यासाद्धठेनाब्जगकुलिशमणौ साधयेद्बिन्दुरोधात् ॥

इह प्रत्याहारेण यदा योगी शुद्धो भवति बिम्बेन स्थिरीभूतेन तदा सर्वमन्त्रैरधिष्ठ्यते वचसा वरदानादिकं ददाति । पञ्चाभिज्ञानलाभी

भवति नरपते ध्यानयोगेन शुद्ध इति। इह यदाऽनिमिषचक्षुर्भवति तदा दिव्यचक्षुर्भवत्येवं दिव्यश्रोत्रो ध्यानेन शुद्धो भवति। प्राणायामेन शुद्ध इति यदा रविशशिमार्गरहितो योगी भवति सदा मध्यमावाहस्तदा प्राणायामेन शुद्धः सन् पूज्यते बोधिसत्त्वैः प्रशस्यत इत्यर्थः। मारक्लेशादिनाशं विशति दशबलमिति शून्यताबिम्बं ग्राह्यग्राहकचित्तं विशति धारणाया बलेनेति प्राणस्य गतागतक्षयेणैकलोलीभवति। संशुद्धोऽनुस्मृतेरिति बिम्बालिङ्गनं चित्तस्य सर्वविकल्परहितत्वं तस्माच्छुद्धो यदा तदा विमलं प्रभामण्डलं भवति। अपि च शब्दाद्रोमकूपात्स्फुरतपञ्चरश्मयो निश्चरन्ति ज्ञानबिम्बात्। शून्यबिम्बादिति। तस्माच्छुद्धः समाधाविति। इह ग्राह्यग्राहकचित्तयोरेकत्वेन यदक्षरसुखं भवति तत्सुखं समाधिरुच्यते। तस्माच्छुद्धः समाधेः शुद्धो वैमल्यं गतः कतिपयदिवसैस्त्रिपक्षत्रिवर्षैः सिध्यति। ज्ञानदेह इति दशबलवशितादिकं प्राप्तो बोधिसत्त्वो भवतीति प्रत्याहारनियमः॥ ॥ इदानीं हठयोग उच्यते। इह यदा प्रत्याहारादिभिर्बिम्बे दृष्टे सत्यक्षरक्षणमुत्पद्यते अयन्त्रितप्राणतया तदा नादाभ्यासाद्धठेन प्राणं मध्यमायां वाहयित्वा प्रज्ञाब्जगतकुलिशमणौ बोधिचित्तबिन्दुनिरोधादक्षरक्षणं साधयेन्निष्पन्देनेति हठयोगः। नादाभ्यासोऽत्रैवोक्तः।

या शक्तिर्नाभिमध्याद्व्रजति परपदं द्वादशान्तं कलान्तं
सा नाभौ संनिरुद्धा तडिदनलनिभा दण्डरूपोत्थिता च।
चक्राच्चक्रान्तरं वै मृदुललितगतिश्चालिता मध्यनाड्यां
यावच्चोष्णीषरन्ध्रं स्पृशति हठतया सच्चिवद्धाह्यचर्म॥
अपानं तत्र काले परमहठतया प्रेरयेदूर्ध्वमार्गे
उष्णीषं भेदयित्वा व्रजति परपुरं वायुयुग्मे निरुद्धे।
एवं वज्रप्रबोधान्मनसि सविषये खेचरत्वं प्रयाति
पञ्चाभिज्ञास्वभावा भवति पुनरियं योगिनां विश्वमाता॥
प्रज्ञाज्ञानं च चित्तं भवति दशविधस्तस्य चाभासः स एव
सेकोऽस्मिन्मज्जनं यद्विमलशशिनिभादर्शबिम्बोपमे वै।
तस्मान्निर्वाणसौख्याच्युतमपि सहजं चाक्षरं वै चतुर्थम्
यस्यैतद्बुद्धवक्त्रं हृदयमुखगतं वर्तते श्रीगुरुः सः॥

इह प्रज्ञा च ज्ञानं च यथासङ्ख्यं ग्राहकचित्तं तस्य च ग्राहकचित्तस्य यो दशविधो धूमादिको ग्राह्यादर्शभासः प्रतिसेनावत्स एव ज्ञानं ग्राह्यचित्तमित्यर्थः। एवमादर्शे स्वचक्षुःप्रतिबिम्बमिव स्वचक्षुर्ग्राह्यमिति प्रज्ञा च ज्ञानं च सेकोऽस्मिन्मज्जनं यदिति। इह ग्राह्यचित्ते ग्राहकचित्तस्य यस्तस्मिन् प्रवेशो बाह्यविषयेष्वप्रवृत्तिः प्रत्याहारो ध्यानं प्राणायामो धारणा मज्जनमित्युच्यते षडङ्गे। तस्मान्मज्जनान्निर्वाणसौख्यमच्युतमपि सहजं चाक्षरं वै चतुर्थं सुखं बालप्रौढस्पन्दानां परं लोकोपममतिक्रान्तं त्रैलोक्याचारमुक्तमित्यर्थः। हसितेक्षणस्पर्शालिङ्गनपाणिव्याप्तिद्वन्द्वरहितं कर्ममुद्राज्ञानमुद्राहेतुरहितं शून्यतासर्वाकारप्रतिभासलक्षणमिति। इदं बुद्धवक्त्रं ज्ञानवक्त्रं यस्याचार्यस्य हृदयगतं भावितं स्वानुभवं सुखगतं शिष्येभ्यः प्रतिपादनाय वर्तते सर्वकालं स श्रीगुरुर्वज्रधर इत्यर्थः॥ ॥ इदानीं योगोपसंहार उच्यते।

मध्ये प्राणप्रवेशः सरविशशिगतेर्बन्धनं सव्यवामे
चित्तं मुद्राप्रसङ्गे परमसुखगतं वज्रसम्बोधनं च।
पद्मे वज्रध्वनिर्वा स्वकरसलिलजोल्लालनं सौख्यहेतो-
र्बीजात्यागः स सौख्यं मरणभयहरः श्रीगुरोर्वक्त्रमेतत्॥

इह प्रथमं योगिना मध्ये प्राणप्रवेशः कर्तव्योऽवधूत्यां येन निमित्तं पश्यतीत्येकं श्रीगुरोर्बुद्धस्य कायवज्रवक्त्रमुच्यते तस्मात्सरविणा दक्षिणगतिना सार्धं शशिगतेर्वामनाडीगतेर्बन्धनं प्राणस्येति नियमः। प्राणायामो द्वितीयवाग्वज्रम्। चित्तं मुद्राप्रसङ्गे बिम्बेऽनुरक्तम्। बोधिचित्तं द्रुतं तृतीयं चित्तवज्रं परमसुखगतं वज्रसम्बोधनं च।

अथ बिम्बद्वारेणानन्दो न भवति तदा पद्मे वज्रध्वनिर्वा शनैः कर्तव्यः। अथ * * न लभते तदा * * * * कर्तव्यं सौख्यवृद्धिहेतोः पातहेतोर्न। एवं बीजात्यागः। स सौख्यं भवति मरणभयहरः श्रीगुरोर्वक्त्रं चतुर्थं ज्ञानवक्त्रमेतदिति योगाभ्यासनियमः॥

॥ इदानीं पञ्चमण्डलक्षय उच्यते।

पृथ्वी तोयं प्रयाति ज्वलनमपि जलं पावको मारुतं च
वायुः शून्यं च शून्यं व्रजाति दशविधं वैनिमित्तं निमित्तम्।

सर्वाकारं प्रयात्यक्षरपरमसुखानाहरं ज्ञानकार्यं
ज्ञानाद्वृद्धिश्च सिद्धिर्भवति नरपते जन्मनीहैव पुंसाम् ॥

इह यदा योग्यनिमिषनयनो भवति क्रोधदृष्ट्या शून्य आरोपितचित्तः। तदा वामे दक्षिणे वा पृथिवीत्युपलक्षणं यदा दक्षिणे पृथ्वीप्रवाहकाले योगी भावनां करोति तदायं विधिः। न पुनर्वामनाडी प्रवाहकाल आकाशमण्डलादिक्रमतः। तेन वामे दक्षिणे वायुमण्डलं वहति प्राणस्तद्धर्मित्वात्तद्देवमण्डलमुच्यते। तेन दक्षिणनाड्यां पृथिवीमण्डले प्राणोऽम्मण्डलं याति। एवं ज्ञानमण्डलं यावद्वामनाड्यामाकाशादिना याति। एवं शून्यं व्रजति दशविधं निमित्तं धूमादिकं निमित्तं सर्वाकारबिम्बं व्रजति बिम्बं चाक्षरसुखं व्रजति। तदेव ज्ञानं प्रज्ञापारमिताया ज्ञानाद्वृद्धिश्चाकाशगमनादिका सिद्धिश्च त्रैधातुकेश्वरत्वं भवति नरपते जन्मनीहैव पुंसामिति मार्गप्रवेशनियमः॥ पूर्वपूर्वसेकापेक्षमुत्तरोत्तरसेकं श्रीकालचक्रविमलप्रभादिवचनैः स प्रपञ्चमभिधाय लोकोत्तरसेकं च सिक्त्वा तत्त्वं प्रकाशयेदिति लौकिकसेकपूर्वकोऽपि षडङ्गयोगहेतुक एवेति षडङ्गयोगं च श्रीकालचक्रादिवचनैरेव विस्तरेण प्रतिपाद्येदानीमस्यैव साधनमित्यादिप्रकृतं व्याख्यातुमारभ्यतेऽस्यैव निरवशेषक्लेशज्ञेयावरणेन स दाहकस्य सर्वज्ञज्ञानाग्नेः साधनं स्फूटीभावं धूमादिभिः कुर्याद्योगी। किंभूतैस्तैः सर्वस्मिन्मूलतन्त्रे लघुतन्त्र आर्यप्रज्ञापारमितादिनीतार्थसूत्रे प्रसिद्धैरकस्माच्छून्ये प्रतिभासनात्प्रतिभासैः सर्वविकल्पोपरमादचिन्तितैस्तत्त्वफलस्य पूर्वरूपकान्निमित्तैर्ग्राह्यग्राहकरहिता स्वभावशून्यता धीः प्रज्ञा तद्बिम्बैर्योगिप्रत्यक्षाभासैः। बाह्याध्यात्ममलाननुलिप्तत्वान्नभःसमैः। सदसदादिविकल्पकलङ्कानङ्कितत्वात्। अस्तिनास्तिव्यतिक्रान्तैर्योगिस्वसंवेद्यत्वात्प्रत्ययार्थैः स्वचेतसः सर्वाकाराकृत्रिमाद्भुतनिःस्वभावभावरूपत्वात्सर्वतः परमाणुरजःसन्दोहवर्जितैः। सकलबाह्याध्यात्मव्यापकशुक्लधूमाकारः शून्याभासः। अयं च मेघाभासानन्तरमुत्पद्यते। यथोक्तम्।

प्रथमं मेघवद्भाति द्वितीयं धूम्रसन्निभमिति।

एवं चलज्जलाकारमरीचिः खद्योतदीपाकारौ प्रसिद्धावेतानि चत्वारि निमित्तानि निरन्ध्रगृहेऽन्धकारभवत्वाद्रात्रियोग आकाशयोगश्च। यथोक्तं श्रीसमाजादौ प्रथमद्वितीयविलोमेन।

निरोधवज्रगते चित्ते निमित्तोद्ग्रहो जायते ।
प्रथमं मरीचिकाकारं द्वितीयं धूम्रसन्निभम् ॥
तृतीयं खद्योतकाकारं चतुर्थं दीपमुज्ज्वलम् ।
पञ्चमं तु सदालोकं निरभ्रगगनसन्निभमिति ॥

ततो निरभ्रगगनसमाभासपूर्वो वह्न्याकारः शून्याभासोज्ज्वलः । इन्दुभास्कराभासौ प्रसिद्धौ । तमेति राह्वालोकः कृष्णरत्नवदाभासः । कलेति विद्युदाभासः । महाबिन्दुरिति सचराचरद्योतकनीलवर्णचन्द्रमण्डलाकाराभासः । एतानि षण्णिमित्तानि निरभ्रगगनालोकभवत्वाद्वियोगोऽप्यवकाशयोगश्च ततस्तन्मध्यगामिसम्भोगकायात्मकबुद्धबिम्बदर्शनसहितमेकक्षणे करस्थनीरोपमस्वच्छसर्वाकारघटपटादिदर्शनविश्वबिम्बप्रभास्वरम् । पिहितापिहितनेत्राभ्यामिति । अन्तरालावलम्बितयाऽर्धोन्मीलितलोचनाभ्यां शून्य आकाशे ग्राह्यग्राहकरहिते यन्नानुकल्पितं स्वप्नवद्बिम्बं योगिप्रत्यक्षं तद्बिम्बं विश्वबिम्बं भावयेद्ध्यानाङ्गेन स्थिरीकुर्यादुक्तं मध्यमायां जिनजनन्यां रत्नालोको नाम समाधी रत्नप्रदीपो नाम समाधिः सर्वाकारदर्शी नाम समाधिरित्यादि । नामसङ्गीत्यां च प्रत्यक्षः सर्वबुद्धानां ज्ञानार्चिः स्वप्रभास्वर इति ॥ आर्यनागार्जुनपादैश्च–

अस्तिनास्तिव्यतिक्रान्ता बुद्धिर्येषां निराश्रया ।
गम्भीरस्तैर्निरालम्बः प्रत्ययार्थो विभाव्यते ॥

कम्बलाम्बरपादैरपि–

ज्ञेयान्यन्यत्र लिङ्गानि लब्धालोकेन योगिना ।
सिद्धेरव्यभिचारिण्यो धूमवत्कृष्णवर्त्मनः ॥
करोति स्तब्धतामक्ष्णोः शिरसश्चावनम्रताम् ।
स्तैमित्यं चित्तचैत्तानां शून्यतां शून्यतेक्षिणाम् ॥

अन्यैरपि–

विमलनभसि यस्मिन्निर्मिते लोचनार्द्धे
स्फुरदुरुकरुणार्द्रादाशयागाढमार्गात् ।
सदसदुभयभावाभावनिर्भेद्याकस्मात्
उदयादखिलधर्माद्यन्वयः शून्यतायाः ॥

तथा ।

आदावाद्यन्तनिर्मुक्तो मध्यमात्रं समाश्रितः ।
तत्रस्थो वर्जयेद्यस्तज्ज्योनिरस्य दशात्मकम् ॥

इहान्तरालावगमो महागुरुप्रसादतः पुण्यवतामुदाहृतः । अयं हि योगीश्वरवज्रगीतिनः प्रचक्षते संवृतिप्रदः । श्रीसरहपादैरुक्तम्–

मूढो अन्तरालपरिमाणह ।
तुट्टै मोहजाल गुरु पुच्छिअ जानह ॥
पढमे यै आआस विसुद्धो ।
चाहंते चाहंते दिट्ठि निरुद्धो ॥

तथा–

अच्चउ किं बहुवोल्लिऐ धम्मह एह पम्माण ।
आधउग्घाडे लोअणे दिट्ठिविसामे जाण ॥

उइ दूरे गअण मंज्जो.... अद्धूआ ।
पेक्खु रे भुसुकु सुण्णअरूआ ॥
भुसुकु फुलिङ्गौ अनुपमफुल्ला ।
लेहू रे कुसुम अनग्घ विमुल्ल ॥
एहसो फुल्ला नानवण्णे ।
सो फुल्ला फुलिङ्गौ सूणारण्णे ॥

तथा–

सम्बरफुलि लामाकाए अपतिठाणगरूआ ।
भावाभावविमुक्कारसअल इ सुद्धसरूआ ॥
चिन्ताचिन्तते पोहा इ गेलिरती ।
दीवा जाली वाट चाहन्ति सान्ती ॥

तथा–

उइअ उरे भुसुकुतारा ।
शान्ति भणइ पोहान्तपहारा ॥

पुनः–

पुण्णिमचन्दा उइअउ जव्वें।
चिअराअनिमिलिअ तव्वें ॥
आकढकरुणा डमरुलिबाजअ।
आज्ज देव निरालें राजअ ॥
वामे दाहिणे गुमघाट।
भणइ काह्नु अन्तरालें वाट ॥
अनुभाववोहरअण सुट्ठु गूढो।
मुच्चऊ नाअर बज्झाइ मूढो ॥
फुलिआ पञ्चफुल्ल अवलीना।
आकटचीअ निरालेंदीना ॥

तथा–

कीस कए लेक अब्भुआ।
चान्दसुज्ज बान्धि जालिलि क दीवा ॥
हसइ सान्ती सअ आपणकरि सखी।
आकासविआअल देखी ॥

पुनः–

गम्भीरधर्म सूनिआ बढ तुट्ठो।
णिसि अन्धारी किम्पि न दिट्ठो ॥
गअणशिहरें जइ फुल्लइ फुल्ला।
शान्ति भणइ टव्वें तुट्टइ भुल्ला ॥

अन्यैश्चोक्तम्–

अन्तरालमणपवणानयणा।
एककाल जइ जो धम्म निउणा ॥
अवस उअज्जइ जिनगुणरअणा।
एत्त उ सअल तथागतवअणा ॥

पुनः–

विविहविअप्पविवज्जि अचिओ।
अन्तराल जइ नअणकिओ ॥

फुड पतिहासइ दहविहमग्ग ।
तहिं योइसर सअल इ लग्ग ॥
णिअमण सअल लक्कन रहिओ ।
अक्खउघाडँ लोअनँ साहिओ ॥
मज्झें पवण हालइ तव्वें ।
वज्जाण लघुञ्ञा उट्टइ तव्वें ॥

तस्मात्सन्देहतो धूमादिमार्गो बुद्धत्वार्थिना भावयितव्याः ॥

ननु सकलकल्पनाकलङ्कानङ्किता महामुद्राभावना च समारोपस्तत्कथं भावयेदित्युक्तमित्याह । अभाव इत्यादि । इह ह्यालम्बनं द्विविधम् । प्रत्यक्षमनुमानं च । तदुक्तं श्रीकालचक्रे तट्टीकायां च –

प्रत्यक्षं चानुमानं द्विविधमिह भवेद्देवतालम्बनं यत्
प्रत्यक्षं तत्त्वयोगादुडुरिव गगनेऽनेकसम्भोगकायः ।
अप्रत्यक्षेऽनुमानं मृतकतनुरिवातत्त्वतः कल्पनं यत्
चित्रादौ दर्शनीयं व्युपरिणतधियां योगिनां भावनार्थम् ॥

इह सत्त्वानामाशयवशेन योगिनां प्रत्यक्षं चानुमानं द्विविधमपि भवेद्देवतालम्बनं यत्तयोः प्रत्यक्षानुमानयोर्यत्प्रत्यक्षं तद्व्यपगतसकलकल्पनाकलङ्कं सद्गुरुमार्गोपदेशजाततत्त्वयोगाद्गगन उडुरिव भवेत्कालचक्रवदनेकसम्भोगकायं मांसादिचक्षुर्ग्राह्यं मायास्वप्नसदृशं त्रिभवं त्र्यध्वनि। अत्र प्रथमं मांसचक्षुषाऽऽदिकर्मिको योगी विश्वबिम्बमभिज्ञामन्तरेण पश्यति। ततो दिव्यचक्षुषाऽभिज्ञावधिवशात्[1] । ततो बुद्धचक्षुषा वीतरागावधिवशात् । ततः प्रज्ञाचक्षुषा बोधिसत्त्वावधिवशात् । ततो ज्ञानचक्षुषा सम्यक्सम्बुद्धावधिवशात् । सर्वोपधिविनिर्मुक्तितः । एवं तथागतस्य पञ्चचक्षुंसि मांसादीन्युक्तानि शून्यतादर्शनं प्रति । अन्ये सत्त्वाः शून्यतादर्शनविषये जात्यन्धा इति तत्त्वभावनानियमः। अतत्त्वसाधने पुनरप्रत्यक्षेऽनुमानं मृतकतनुरिवातत्त्वतः कल्पनं यत् । तच्चित्रादौ दर्शनीयमिति । मृतकतनुरिव सर्वथा तत्त्वदर्शनाभावात् । शववत् । चित्रप्रतिमाघटितानि सित्का बुद्धबोधिसत्त्वानां मण्डलचक्रं वा लिखित्वा नियताकारं दर्शनीयं बालयोगिनां मन्दानां भावनार्थमिति विकल्पभावनानियमः। तस्मादभावे निरभ्रे गगने स्वप्न-

1. Tib. seems to suggest *sandhi* instead of *avadhi* (ts'ams).

मायादिसदृशे बिम्बे प्रत्याहारेण दृष्टे या भावना ध्यानाङ्गेन त्रैकालिकत्रैधातुकप्रतिभासात्मकस्य प्रत्यात्मवेद्ययोगिस्वचेतसः प्रबन्धेन प्रवर्तनं सा योगिनां भावना कल्पना न भवति अस्तिनास्तिभावाभावादिसकलविकल्पजालविषयविज्ञानादिप्राणापानवायूनामुपरमादेव स्फुटतरध्यध्वत्रैधातुकप्रतिभासस्योदयात् । उक्तं चार्यदेवपादैः—

आत्मन्येव लयं गते भगवति प्राणाधिपे स्वामिनि
श्वासोच्छ्वासगणे गते प्रशान्तिं जीवानिले यन्त्रिते ।
यो ज्योतिः प्रसरः प्रभास्वरतरो योगीश्वराणामसौ
स्वाङ्गादेव विनिर्गतो हृततमास्त्रैलोक्यमाक्रमति ॥

सरहपादैश्च—

कल्पविनाशान्नाशं बुद्धेरनुकल्पयन्ति किल कुधियः ।
अस्मादेव तु सुधियामुदयति गगनाधिकं किमपि ॥
अपुब्व वसन्त दुकेल्ला शवरोऽम्बर फलइ फुल्लइ ।
भोडिअहात्थेन चाहि अइविरहें केलि करेइ ॥
अनिमिअलोअण चीअ निरोहें ।
पवणहोवाऽसइ सद्गुरुवोहें ॥[1]

त्रैकालिकविश्वरूपस्यापि चेतसो न भावोऽतीतादिवस्तुरूपत्वं तेषामभावात्परमाणुधर्मतातीतत्वाच्चातीतादेव भावेऽपि नैवाभावः सर्वोपाख्याविरहलक्षणश्चित्तस्य कुत इत्याह बिम्बेऽकल्पितदर्शनादिति । यतो बिम्बे विश्वबिम्बाकारे चेतस्य कल्पितं सकलकल्पनापगतं दर्शनं प्रत्यक्षसंवेदनमसत्तयापह्नवमनुभूयत एव । उक्तं च मूलतन्त्रे—

अस्तिनास्तिव्यतिक्रान्तो भावाभावाक्षयोऽद्वयः ।
परमाणुधर्मतातीतः शून्यधर्मविवर्जितः ।
शश्वतोच्छेदनिर्मुक्तो वज्रयोगो निरन्वयः ॥

इति । सरहपादैश्च—

सर्वाभावं गतवति मनःस्पन्दिसंसारकेऽस्मिन्
आहो श्वभ्रे प्रविततधियां चापि मोहप्रपाते ।

---

1. Lines from 3 to 6 are not readable. Many attempts to reconstruct them with the help of the Tibetan translation have proved useless.

वन्द्या देव्यो यदि खलु सदा सन्ति नालम्बनार्थाः ।
धर्मस्तम्भाः कुत इह तदा सत्सुखश्रीप्रभावः ॥

अविकल्पितसिद्ध्यर्थमनुरूपं दृष्टान्तमाह । प्रतिसेनामित्यादि । प्रतिसेनाशब्देन साधकचिन्तितो दर्पणादिषु प्रतिभासमानोऽर्थोऽभिधीयते । तमादर्शे दर्पणेऽवस्तुजां न चौरादिजडधर्मतां पश्येत् । प्रतिसेनावतारतन्त्रे किल दर्पणखड्गाङ्गुष्ठप्रदीपचन्द्रसूर्योदककुण्डनेत्रेष्ववस्तुषु प्रतिसेनावतार उक्तः । तथातीतानागतं धर्मसंवरे शून्ये सर्वाकारबिम्बे तत्त्वयोगी लब्धनिर्विकल्पमार्गः पश्यत्यस्याः प्रतिसेनाया दृश्यमानाया यो भावः प्रतिभासलक्षणः स न भावः स्यात्तद्वस्तु न भवति कुत इत्याह । वस्तुशून्यार्थदर्शनादिति । वस्तुना परमाणुसन्दोहात्मना शून्यो व्यपगतः । स चासावर्थः । प्रतिभासलक्षणस्तस्य दर्शनं निर्विकल्पप्रत्यक्षोपलम्भाद्वस्तुनोऽणुसन्दोहात्मकस्यातीतादेरभावतोऽर्थः प्रतिभासलक्षणोऽस्ति लोक एव निर्वस्तुकोऽप्यर्थो दृष्टो यथा मायास्वप्नेन्द्रजालम् । अमुमेवार्थमाह । असतीत्यादि स च निर्विकल्पादभ्रान्तज्ञानोत्पादः । सर्वाकारजगदर्थसम्पादकत्वाच्चिन्तामणिरिव । ननु यदनालम्बनं तत्कथं जगदर्थकारि विषयेण विनोत्पत्तिरिति । दृष्टान्तशुद्धिमाह । अदृष्टमित्यादि । प्रागदृष्टमेव चौरादिकमत्रस्था मन्त्राधिष्ठितलोचना कुमारी पश्यति प्रतिसेनासाधकपुरुषास्तु तत्स्थानं गत्वा कुमारीकथितं साधारणनेत्राभ्यां पश्यन्ति । अयमाशयः । योगी सिद्धोपदेशमन्त्राधिष्ठितबुद्धिलोचनः कुमारीवदस्खलितबोधिचित्तचन्द्रोऽनुपदिष्टं पृथग्जनागम्यसंवरे लोकोत्तरं तत्त्वं पश्यति । तच्च सदा सदादिसर्वप्रपञ्चवञ्चितमित्याह । यदीत्यादि । अन्यचक्षुर्भ्यां ललाटादिभवाभ्यां न पश्यति नापि स्वचक्षुर्भ्यामन्यदाऽदर्शनात् । अनेन प्रतिसेनादृष्टान्तेन योगिप्रत्यक्षं सर्वथा स्वभावाभावादजातम् । स्वप्ने कुमारिका पुत्रोपलम्भवत्सिद्धम् । सर्वज्ञज्ञानमुक्तं चात्र समाधिराजसूत्रे । यथा कुमारी शयनान्तरेऽस्मिन् सा पुत्रजातं च पश्येत् । जातेऽतितुष्टा मृते दुर्मनःस्थिता तथोपमाज्ज्ञानतः सर्वधर्मान् ॥ कुमार्या यद्दृश्यमानमजातमनुत्पन्नं तत्तस्या जातकं यथोत्पन्नमिवेत्यर्थः ॥ प्राणायाममाहेदृशे स्वप्नमायासदृशे बिम्बे सर्वाकारविश्वबिम्बे दृष्टे सति ततस्तदनन्तरं प्राणायामं प्राणापानवायो-

र्निरोधं पूरककुम्भकरेचकयोगेन निरन्तरमविच्छिन्नं कुर्यात् । कास्वित्याह । ऊर्ध्वेत्यादि । नाभेरूर्ध्वमधश्च तिसृषु तिसृषु नाडीषु यथाक्रमं प्राणापानयोर्निरोधं प्राणायामस्य कायादिधातुत्रयरोधकत्वात् । किंभूतास्वित्यादि । चन्द्रेत्यादि । ऊर्ध्वं वामासव्यामध्यासु । अधो मध्यावामासव्यासु । चन्द्रार्कराहुवाहिनीषु तिसृषु । विण्मूत्रशुक्रवाहिनीषु तिसृषु । तथा तोयाग्निशून्यवाहिनीषु । भूवायुज्ञानधातुवाहिनीषु । अन्यासां द्वासप्ततिनाडीसहस्रजन्मस्थानत्वाज्जातिषु । चन्द्रेत्यादि । उर्ध्वं चन्द्रादिनाडीत्रयं कायवाक्चित्तानि । अधो विडादिनाडीत्रयं कायवाक्चित्तानि । आसां षट्कुलकल्पनामाह । चन्द्रेत्यादि । चन्द्रस्तोयधातुरुपायस्य शुक्रधातोः कायो भवति । प्रज्ञाया रजोधातोर्दिवाकारस्तेजोधातुर्वाग्भवति रजोधातोरेव विण्णाडी कायः । विभोः शुक्रधातोर्मूत्रवाहिनी वाक् । ऊर्ध्वेति शुक्रधातो राहुवाहिनी चित्तं रजोधातोः शुक्रवाहिनी चित्तम् । ऊर्ध्वाधः षट्कुलमिति । तोयानिलाकाशवाहिनीनामुपायाङ्गत्वाद्भूम्यग्निज्ञानवाहिनीनां प्रज्ञाङ्गत्वात् । सार्धदशमासोपेतषण्णवतिवर्षाभ्यन्तरे मरणमरिष्टं तद्भवेत् वक्ष्यमाणनियमादधिकमारुत्प्रवाहैरुर्ध्वेऽधश्च कायोरित्याह । कायवाग्नाड्योर्यथायोगं ललनारसनयोर्विण्मूत्रनाड्योश्च यदाधो विण्णाडी निरुद्धा भवति तदोर्ध्ववामनाड्यामरिष्टं भवति । यदा मूत्रनाडी निरुद्धा भवति तदोर्ध्वदक्षिणनाड्यामरिष्टं भवति । एतच्च प्रपञ्चेन वक्ष्यति । तमित्याद्युद्देशस्तस्य निर्देश उत्पाद इत्यादि । तमिति शुक्रवाहिन्योश्चारिष्टं नास्ति तमिति शुक्रवाहिन्योर्मारुत उत्पत्तिर्गर्भान्निष्क्रमो मरणं स्थितिः स्वस्थता । न केवलं शुक्रवाहिन्यवधूत्युत्पादादिकालत्रये वहति । किं च द्वादशलग्नभ्रमणसाम्याद्रवेः प्राणवायोर्मेषादिलग्नात्मकवामनासापुटाद्वृषभादिलग्नात्मकदक्षिणपुटात्सङ्क्रमसन्धौ विषुवाख्ये च मध्यमा वहति । तन्निर्दिशति लग्नोदयेत्यादि चन्द्रसूर्ययोः समवाहित्वाद्विषुवं विषुवत्सङ्ख्यामाह । षट्पञ्चाशदित्यादि । प्रवेशनिर्गमावेकीकृत्यैकलग्नोदयाभिसन्धौ सपादषट्पञ्चाशद्वारान्वहति । एवमहोरात्रेण द्वादशलग्नसन्धौ पञ्चसप्तत्यधिकषट्शतश्वासोच्छ्वासान्वहति । यान्सर्वसत्त्वानां शरीरे षट्शताधिकैकविंशतिसहस्रश्वासान्ललनारसने वहतः

ता एव पञ्चसप्तत्यधिकषट्शतेनोनान्वहत: । प्रात्यह्निकपञ्चसप्तत्यधिक-षट्शतश्वासान्मध्यमाया वर्षशतदिनै: षट्त्रिंशत्सहस्रै: सङ्गुण्य ततो दिनश्वासै: षट्शताधिकैकविंशतिसहस्रैर्विभज्य लभ्यन्ते पञ्चविंशत्य-धिकैकादशशतदिनानि तानि च षष्ट्यधिकशतैर्वर्षदिनैर्विभक्तानि त्रिपक्ष्यधिकत्रिवर्षाणि भवन्ति ॥ ऊर्ध्वे या वामा सैव चन्द्रो ललनेडा तोयवाहिन्यमिताभतथागतस्वरूपा च । सव्यात्त्वर्क: पिङ्गलापरेति र-सना तेजोवाहिनी रत्नसम्भवस्वरूपा च अधो मध्या विण्णाडी भूवा-हिनी वैरोचनस्वरूपा च वामा तु मूत्रनाडी वायुवाहिन्यमोघसिद्धि-स्वभावा च ऊर्ध्वे मध्यमा राहुनाडी शून्यवाहिनी अक्षोभ्यस्वभावा च । सैवाध: सव्या शुक्रनाडी ज्ञानवाहिनी वज्रसत्त्वस्वरूपा च विण्णाडी चोर्ध्वे चन्द्रमार्गेण सहैकीभवति । एकशुषिरत्वात्तथा मूत्रनाडी रवि-णैकीभवति । एवमुत्पादादिकालचतुष्टये शुक्रनाडी राहुणैकीभवति । या नाभ्यूर्ध्वेऽवधूती तस्या: सुषुम्ना तमोवहिनीति नामद्वयं या चाध: शुक्रवाहिनी तस्या: खगमुखा शङ्खिनीति नामद्वयम् । नाभ्यादिपञ्च-पद्मकर्णिकासु निर्गच्छन्त्यवधूती गतप्राणशक्तिर्भूम्यादिपञ्चधातून् क्र-मेण वहति । तत्र नाभ्यब्जे भुव: पञ्चगुणा गन्धरूपरसस्पर्शशब्दल-क्षणा: । हृदयाब्जे तोयस्य चत्वारो गुणा रूपरसस्पर्शशब्दलक्षणा: । कण्ठाब्जेऽग्नेस्त्रयो गुणा रसस्पर्शशब्दलक्षणा: । ललाटाब्जे मरुतो द्वौ गुणौ स्पर्शशब्दलक्षणौ । उष्णीषाब्जे शून्यस्य शब्दमात्रमेको गुण: । एतान् गृहीत्वाऽवधूती निर्गच्छति संहारेणेति पृथिव्यादिक्रमेण । तदु-क्तमार्यपादै: –

भूधातुर्लीयते तोये तोयं तेजसि लीयते ।
तेजश्च सूक्ष्मधातौ च वायुश्चित्ते विलीयते ॥
चित्तं चैतसिके लीयेताविद्यायां तु चैतसम् ।
सापि प्रभास्वरं गच्छेन्निरोधोऽयं भवत्रये ॥

बहिर्वाहेन धातुक्षयाश्च विशन्ति पुनरुष्णीषकमलादिक्रमेण । क्षितौ नाभिपद्मे विशति विश्राम्यति सृष्टिनेत्याकाशादिक्रमेण । उक्तं चार्यदेवपादै: –

प्रभास्वरान्महाशून्यं शून्याच्चोपायसम्भव: ।
तस्मादुत्पद्यते प्रज्ञा तस्या: पवनसम्भव: ॥

पवनादग्निसम्भूतिरग्नेश्च जलसम्भवः ।
जलाज्जायते पृथिवी सत्त्वानामेष सम्भवः ॥

इति । अन्तर्वाहेन शरीरधातुवृद्धेश्च । इत्यवधूत्या गमनागमने कर्णिकात्कर्णिकामध्ये पारिशेष्याल्ललनारसनयोः पद्मदलेषु गतागतम् । अधो नाभौ गुह्ये च मण्यब्जे शङ्खिनी कायवाक्चित्तवाहिनी सत्त्वरजस्तमोभेदेन त्रिद्व्येकगुणात्मिका संहारक्रमेण निर्गच्छति । सृष्ट्या विशति । एषैव शङ्खिनी स्त्रीणां सुखात्सुरतरागसुखाच्छुक्रं वहति । परे पूर्वे इत्यादिना वक्ष्यमानप्रज्ञोपायालिङ्गनस्योद्देशः । प्रज्ञेत्यादि । ऊर्ध्वे प्राणे सव्यावसव्ययोर्दक्षिणवामयोः प्रज्ञोपायाङ्गभावः । अधोऽपाने मध्यवामयोरूर्ध्वाधो रजःशुक्रप्रवाहयोः । स्त्रीणां शङ्खिन्येव ऋतुकाले रजोवाहाच्चण्डालीत्युच्यते सैव शुक्रवाहात्खगमुखा । ऊर्ध्वेऽवधूती तु ऋतौ ऋतुकाले स्त्रीणां रजोवाहे डोम्बीत्युच्यते पुरुषस्य तु ऋतौ शुक्रागमनकालेऽप्यवधूत्येवोच्यते । वामदक्षिणनासापुटयोर्मण्डलोदयमाह । विज्ञानाद्यमित्यादि । विज्ञानाद्यं सृष्टिक्रमेण भूम्याद्यं संहारक्रमेण । वामनासापुटे वक्ष्यमाणक्रमेण विज्ञानसंस्कारवेदनासंज्ञारूपाख्यपञ्चस्कन्धवाहः । एवं दक्षिणे पृथिव्यप्तेजोवाय्वाकाशाख्यपञ्चधातुवाहः । मध्ये मध्यमामार्गे षष्ठं ज्ञानमण्डलमाकाशादिपञ्चमण्डलात् प्रत्येकमण्डलस्य सपादैकादशश्वासान् गृहीत्वा सपादषट्पञ्चाशतं च सात्मकं वहति । आसां वामदक्षिणमध्यनाडीनामहोरात्रेण षष्टिमण्डलवाहः । तत्र नाभिपद्मदलस्य वामषड्दलेषु मेषमिथुनसिंहतुलाधनुःकुम्भात्मकेषु विज्ञानादिपञ्चमण्डलकत्वात्त्रिंशन्मण्डलान्येवं दक्षिणषड्दलेषु वृषकर्कटकन्यावृश्चिकमकरमीनात्मकेषु प्रत्येकं भूम्यादिपञ्चमण्डलात्मकत्वात् त्रिंशन्मण्डलानि । तत्र दक्षिणे वृषादिलग्ने यदा वहति वायुस्तदा मूले नासापुटस्याधोभागे भूमिमण्डलं दण्डैकं वहति । एवं तस्यैव वामभागे नासावंशप्रदेशे तोयमण्डलम् । सव्ये दक्षिणभागे तेजोमण्डलमूर्ध्वभागे वायुमण्डलम् । मध्ये शून्यमण्डलम् । एवमुभयोर्नासारन्ध्रयोरेकैकमण्डलं दण्डाद्दण्डादनन्तरं वहति पञ्चभिर्दण्डैः पञ्चमण्डलं वहतीत्यर्थः । वामपुटस्य तु वक्ष्यति । दलमध्य इत्यादिना तदपेक्षया प्राणरन्ध्रयोरित्युक्तम् । एका नाडी कति श्वासान्वहति * * * * * मासैर्दिनत्रयं परिवर्धनात्

देकादशदलान्येष त्यजेद्वर्षत्रयं क्रमात्। इत्येकादशदले वाहाच्छ्लेष्मात्मकसत्त्वधातून् शोषयति। द्वादशे तु दले दक्षिणनाडीप्रवाहादन्यदलानारूढा द्वितीयचतुर्थषष्ठमाससम्बन्धि दिनत्रयस्य दिनद्वयं क्षीयते चित्तात्मकरजोधातुक्षयात्। द्वादशदलशोषात्पूर्ववत्कर्णिकायामेकदिनं मध्यमावाहात्। वातात्मकतमोधातुं शोषयित्वा भवान्तरगमनमिति। वामारिष्टेन मरणं योगिनो यान्ति॥ प्रतिपत्त्यर्थं लिपिक्रमः। द्विपुटद्वादशराशिचक्रे पूर्वाद्येकादशदलेषु त्रीणि षण्णवद्वादशपञ्चदशाष्टादशैकविंशतिचतुर्विंशतिसप्तविंशतित्रिंशत्त्रयस्त्रिंशद्द्वादशे तु वामवाहाभावाच्छून्यं बाह्यद्वादशदलेषु क्रमान्मासास्त्रिंशत्सप्तविंशतिचतुर्विंशत्येकविंशत्यष्टादशपञ्चदशद्वादशनवषट्त्रयः। एकादशे त्रिमासक्षयसूचकं शून्यं द्वादशे दिनद्वयं कर्णिकायां दिनमेकम्। एवं त्र्यादिदिनेऽरिष्टस्य वृद्धिः। त्रिंशदादिमासात्मकजीविताख्यस्य शुभस्य हानिः॥ सार्धदशमासोपेतषण्णवतिवर्षावधिः सूर्यचन्द्रवहनकालः। दिनत्रयोनवर्षशतपूरकत्रिपक्षवर्षत्रये मध्यमायां मृत्योरारोहणम्। एतन्निर्दिशति। समविषमेत्यादि। द्व्यादि द्वात्रिंशद्दिनपर्यन्तैः समदिनैः सव्ये। एकादि त्रयस्त्रिंशत्पर्यन्तैर्विषमदिनैर्वामे। आरोहणं तस्य मृत्योः। किं च जन्मकाले जातवृषादिलग्नस्य भूम्याद्यन्यतममण्डलैः। तथा मेषादिलग्नस्य शून्याद्यन्यतममण्डलैस्तं मण्डलमारभ्येत्यर्थः। अयं च वाहः सव्येतरनाडीधातुस्कन्धादिविनाशमधिकृत्य ल्यप् लोपे पञ्चमीति। उपपत्तिमाह। अन्यथा मरणं नेत्यनेनेदमुक्तम्। समलग्नजातकस्य प्रथमं सव्यायां दिनद्वयं वहति। पुनर्दिनद्वयं यथावत्ततो वामायां दिनमेकं दिनमेकं यथावत्। चत्वारि दिनानि सव्ये चत्वारि यथावत्। त्रीणि वामे त्रीणि यथावत्। षट्सव्ये षड्यथावत्। पञ्च वामे पञ्च यथावत्। एवं यावद्द्वात्रिंशत्सव्ये द्वात्रिंशद्यथावत्। त्रयस्त्रिंशद्वामे त्रयस्त्रिंशद्यथावत्। इह दक्षिणे द्व्यादि त्रिंशत्पर्यन्तसमदिनैस्त्रिकत्रिकैः पृथिव्यादिधातुक्षयः क्रमात्। वामे एकाद्यूनत्रिंशत्पर्यन्तैर्विषमदिनैस्त्रिकत्रिकैराकाशादिधातुक्षयः क्रमात्। तत्रैकत्रिंशद्दिनैः सत्त्वधातुक्षयः। द्वात्रिंशद्दिनै रजोधातुक्षयः। त्रयस्त्रिंशद्दिनैस्तमोधातुक्षयः। विषमलग्नजानां त्वेकादिक्रमेणायं वाह इति विशेषः। इति दिनत्रयोनवर्षशतं तदूर्ध्वं चतु-

स्त्रिंशद्दिनाद्यारोहणम् । तत्रैकदिनं सव्ये । एकदिनं वामे । एवं क्रमेण त्रयस्त्रिंशद्दिनानि यावद्वहति । ततः क्रमेण पञ्चस्कन्धधातुविषयेन्द्रियकर्मेन्द्रियक्रियाणां क्षयः । ततो मध्यमायां दिनमेकं ततो धातुस्कन्धादीन् षष्ठान् शोषयित्वा भवनान्तरं गच्छति ॥ इत्यरिष्टलक्षणं ज्ञात्वा योगिनान्तद्वञ्चनोपायमाह । अरिष्टेत्यादि । तत्र सूर्यारिष्टे सति वज्रपर्यङ्कं बद्ध्वा प्राणयामपूर्वकं सव्यबाहुना सव्यस्तनपीडनात्पञ्चमण्डलवाहात्मकात्सव्यादाकृष्य वामे प्राणं सञ्चारयेत् । तेन सूर्यारिष्टनिवृत्तिः । तथा वामात्सव्ये चन्द्रारिष्टनिवृत्तिः । तथा पर्यङ्कं कृत्वा बिन्दौ ललाटस्थसितषोडशदलपद्ममध्ये प्राणयामपूर्वकं चित्तं निवेशयेत् । प्राणं बिन्दौ निवेशयेदिति मुख्यतो धारणालक्षणमेतत् । सैव च मुख्योऽरिष्टवञ्चनोपायः । अवधूतीत्यादि ग्रन्थश्च तदभिप्रायेणैव योज्यः ॥ तथा पर्यङ्कं कृत्वाऽवधूतीपदं नाभिपद्मं पीतचतुःषष्टिदलं तन्मध्ये चन्द्रमण्डले अंकारं शुक्लोर्ध्वरेखाकारं सप्राणायामं भावयेत् । ततो वज्रोत्थानं सदा कुर्यात् । खाशयसरोरुहादिना यथेन्दुर्बहिर्न भवेत् । अरिष्टहेतुचन्द्रार्कगतिभञ्जकत्वात् । अस्योपायस्य प्राधान्यमाह । अन्यथा नेत्यादि । ऊर्ध्वारिष्टं सवञ्चनमुक्त्वाऽधोऽरिष्टमाह । अपानोऽधश्च शङ्खिन्यामिति न केवलं शङ्खिन्यां नाड्यामधश्चेति विण्मूत्रवाहिन्योरपानाख्यो वायुर्वहतीति शेषः । अजस्रं विण्मूत्रवाहितया तस्याः प्रवेशतोऽपि मरणम् । सर्वारिष्टवञ्चनोपायव्याजेनानन्दानरिष्टेत्यादिनोद्दिश्य निर्दिशति । शुक्रेत्यादिना चतुर्दलोष्णीषपद्ममध्यात् षोडशदलललाटाब्जमध्ये शुक्रस्य नन्दाभद्राजयारिक्तापूर्णाख्यपञ्चकलस्यागमनमुभयव्याप्तिः प्रथमानन्दम् । तस्मात्कण्ठे हृदि परमानन्दम् । द्वात्रिंशद्दलकण्ठाब्जादष्टदलहृत्पद्मे पूर्णवद्व्याप्तिः परमानन्दम् । विरमानन्दं ततो भवेत् । चतुःषष्टिदलनाभिपद्माद्द्वात्रिंशद्दलगुह्याब्जे व्याप्तिर्विरमानन्दम् । तच्च विविधरमणं गाढालिङ्गनशीत्कारकण्ठकूजनादिलक्षणं नाभौ गुह्ये तु बहिरुल्लेखविमुखे सुखं भुज्यते मयेत्युल्लेखलक्षितं सुखसंवेदनमात्रं विरमानन्दं पर्यन्तजम् । न तु विगतं रमणं सुखम् ततो गुह्यपद्मादष्टदलवज्रमण्यन्तर्गताब्जं यावत् षोडशकलस्येन्दोरागमनं

सहजानन्दम् । धारणाया बलेन बाह्यगतेरभावादच्युतम् । विरागाद्रागविगमादुष्णीषस्थं यत्सौख्यं शुक्रं तत्प्रतिष्ठितम् । यत्तु वज्रमणोश्च्युतं तन्निर्वाणम् । अयं तु सुखराज उष्णीषवज्रमण्यन्तरालव्यापित्वादप्रतिष्ठितनिर्वाणः । अत एव महारागोऽक्षरश्च प्राधान्यात्प्रभुस्त्रैधातुकेश्वरः । सर्वेषां तत्पदावाप्तिवाञ्छयाऽभिमतत्वात् । शुक्रमेवेन्दुरमृतत्वात् । तस्य शुक्रेन्दोरुष्णीष उदयः । शुक्लप्रतिपद्यावद्गुह्ये तृतीया पूर्णा । इत्थमानन्दादिभेदेन त्रिपूर्णं गते बोधिचित्ते तु गुह्ये विरमानन्दाद्या षोडशी कला सा मणिपद्मे वज्रमूर्धगा वज्राग्रकोटिस्था भवति। तस्मादूर्ध्वं कृष्णप्रतिपदागमे विरागप्रवेशकाले च्युतिकालः स्यात् । च्युतिकाल एव कृष्णाप्रतिपदित्यर्थः । सा च रागनाशात् कृष्णपक्षे रजोरूपरवेराद्या कला मण्यग्रे ततो विरागतो रविरूर्णपदं ललाटं याति ललाटेऽमावसीत्यर्थः । तस्य सूर्यस्य षोडशी कलोष्णीषकमले गता सैव नष्टचन्द्र इत्याख्यातः । सूर्येण रजोरूपेणाच्छादितत्वात् । रागसौख्याद्विरक्तिश्च सैव । अधश्चन्द्रामृतं यातीति । मरणे मरणकाले सर्वदेहिनां देवासुरमनुष्यादीनां चन्द्रामृतं बोधिचित्तमुक्तक्रमेणाधः शुक्रमार्गेण याति च्युतिरागाभ्यासात् । तथा सूर्यरजो ऊर्ध्वं याति राहुरज्ञानमविद्यावासनासहायं प्राणसवलितं विज्ञानं भावलक्षणशुभाशुभकर्मनिर्मितं जन्म याति । यत एवमतः कारणाच्चन्द्रामृतस्य शुक्रधातोरूर्ध्वं उपरिगमनमुक्तमार्गभावनया । अधोऽर्करजसो गमनं राहुलक्षणस्य विज्ञानस्याक्षरे सुखे गमनं कर्तव्यम् । एतच्च भगवतापि पूर्वमाचरितमित्यादि दर्शयति । ऊर्णेत्यादि । बुद्धानां तु चन्द्रामृतस्य पूर्णिमा पञ्चदशकला परिपूर्णत्वमूर्णाब्जे ललाटे भवति । अर्करजसोऽमावसी गुह्ये भवति । तयोश्चन्द्रार्कयोः षोडशी कला यथाक्रमेणोष्णीषे च वज्रमणौ च बुद्धानामिति । तदुक्तं नामसङ्गीत्याम्—

एकपादतलाक्रान्तमहीमण्डतले स्थितः ।
ब्रह्माण्डशिखराक्रान्तः पादाङ्गुष्ठनखे स्थितः ॥

इति । इत्युक्तं वज्रपदम् । पद्यते गम्यते येन तत्पदं ज्ञानमक्षरं पदस्याराधनं नित्यं शिरसा पादवन्दनेत्यभेद्यज्ञानं शास्तुः । सर्वदेहिनामिति सर्वसंसारिणां विपरीतमप्रतिष्ठितम् । अस्मादप्रतिष्ठितनिर्वा-

णाख्यमहासुखसञ्ज्ञकशुद्धकायाद्धातवः पृथिव्यादयो विपरीतं निरावरणतां यान्त्यन्ये ते धातवोऽभेद्याः। धारणाबलेन स्वरसप्रवृत्तायाश्चण्डाल्या ज्वालयाऽऽनन्दादिभेदेन शिरसोऽवलम्बितानां कायवाक्चित्तज्ञानबिन्दूनामूर्ध्वं क्रमेण बहिर्निर्गमाभावादक्षरसुखपूरितानां चतुःकायविशुद्धिमाह मणावित्यादि महासुखादिति। महासुखसञ्ज्ञकशुद्धकायाद्विपरीतेन यः कायबिन्दुः स तुर्यावस्थाक्षयतः शुद्धकायः। स च वज्राग्रे स्थितः। तस्मान्मणौ चित्तं सुषुप्तक्षयतः। गुह्ये वाक् स्वप्नक्षयतः नाभौ कायो जाग्रदवस्थाक्षयत इति। एते च धर्मसम्भोगनिर्माणकायाः शुद्धकायात्स्फुरन्ति। अधोपायस्येति। अधो वज्राग्राद्यतः स्फरणमेतेषां धर्मकायादीनां तदुपायभागस्य व्यवस्थाप्यते। प्रज्ञायाः पुनरूर्ध्वतो भवेत्। तद्दर्शयति ललाटे इत्यादि। अस्याः प्रज्ञाया निर्माणाख्यः कायो ललाटे। पूर्ववद्विपरीतेनैवं कण्ठे हृन्नाभिपङ्कजे यथाक्रमेण वाक्चित्तज्ञानवज्राणि सम्भोगधर्मसहजकायाः। प्रज्ञाभागस्य व्यवस्थाप्यन्ते। एवं प्रज्ञोपायात्मकवज्रसत्त्वकायात्स्कन्धादीनां वैरोचनादिस्वरूपत्वेन सत्त्वार्थाय स्फरणम्। एतेनार्थगत्यानुस्मृत्यङ्गमुद्दिष्टमिति। फलमुद्दिश्य तत्साधनमाह। कर्ममुद्रेत्यादि। कर्ममुद्रा स्तनकेशवती कामधातुसुखस्य हेतुः। कर्म चुम्बनालिङ्गनगुह्यस्पर्शवज्रास्फालनादिव्यापारात्मकं तेनोपलक्षिता मुद्रा प्रत्ययकारिणी प्रत्ययोऽत्र क्षरसुखलक्षणः। मुदं सुखविशेषं रतिं ददातीति मुद्रा। ज्ञानमुद्रा स्वचित्तपरिकल्पिता। विश्वमातादिदेवीस्वभावा पूर्वानुभुक्तेति यावत्। रूपधातुसुखस्य हेतुर्ज्ञानं पूर्वहसितरसितभावादिभावनालक्षणं प्रत्ययोऽत्र स्पर्शसुखलक्षणः। महती चासौ मुद्रा च महामुद्रा महत्वं पुनरस्याः सर्वाकारवरोपेतत्वं न प्रादेशिकत्वम्। मुद्यतेऽनेन बोधिचित्तवज्रेणेति मुद्रा प्रत्ययोऽत्र स्वचित्तपरिकल्पनाधर्मरहितो धूमादिनिमित्तपूर्वकं स्वचित्तप्रतिभासो योगिगम्यः प्रतिसेनावदिति। फलमुद्रा तु महामुद्रामुदं परमाक्षरसुखज्ञानलक्षणम्। रतिं सर्वकालमादत्ते पूर्वावस्थायाऽचलनयोगेनेति मुद्रा महत्वं चास्याः प्रहाणमहत्वेनाधिगममहत्वेन च तत्र प्रहाणमहत्वं सर्वासनसर्वावरणप्रहाणलक्षणस्वभाविकाख्यप्रभास्वरसाक्षात्करणलक्षणम्। अधिगममहत्वं तु परिशुद्धसर्वबुद्धात्मकयुगनद्धाख्यकायसाक्षात्का-

रस्वभावम् । यन्मनस्तमस्तुहिनाद्यखिलमलापगतगगनसन्निभशून्यैकरसप्रभास्वरसाक्षात्कार एव सकलबुद्धधर्माधिगमः। अशेषविश्वार्थसम्पादनशक्तिरूपेण तत्र सर्वबुद्धधर्माणां विद्यमानत्वात्। अत एव धर्माणामाश्रयः कायो धर्मकाय इत्याचक्षते तत्र चाप्रतिभासनेऽप्यवगमव्यवस्थायां घटप्रतिभासे पटाद्यधिगमप्रसङ्गो दुर्निवारः। किं च संख्यादर्शनमदूषणमेव स्यात्। अपि च मायास्वप्नगन्धर्वपुरप्रतिसेनादिवदकल्पितमशेषस्कन्धधात्वायतनादिदर्शनं संवृतिसत्यदर्शनं स्वाधिष्ठानं चोच्यते। संवृतिसत्यमेव च परमार्थसत्यात्मकप्रभास्वरपरिशुद्धमादर्शज्ञानादिरूपवैरोचनाद्याधेयदेवतावृन्दं कुटागाराद्याधारमण्डलं च तदेव लोकोत्तरमण्डलतया सर्वतन्त्रराजेषु गीयते। समस्तबुद्धधर्मस्वभावतया चैतदेव च सत्यद्वयाद्वैधीभावस्वभावं युगनद्धाख्यमुच्यते। तस्माद्युगनद्धकाय एव धर्मकायः। साम्भोगिकस्वाभाविकाभ्यां पृथग्भूतो योगिप्रत्यात्मवेद्यः। उक्तं चार्यमञ्जुश्रीपादैस्तन्त्रोत्तरे—

यत्राभूतेति सत्यं सितकुशलगणो धर्मकायो जिनानां
धर्मात्सम्भोगकायः सकलरुतगणो लक्षणव्यञ्जनानाम्।
राशिर्निर्माणकायोऽक्षरपरमसुखो धर्मकायो न तस्मात्
कायानां लक्षणं यत्तदिह सुखगताचार्यनागाह्वयेन॥
यो नैको नाप्यनेकः स्वपरहितमहासम्पदाधारभूतो
नैवाभावो न भावः खमिव समरसो दुर्विभाव्यस्वभावः।
निर्लेपं निर्विकारं शिवमसमसमं व्यापिनं निष्प्रपञ्चं
वन्दे प्रत्यात्मवेद्यं तमहमनुपमं धर्मकायं जिनानाम्॥
लोकातीतमचिन्त्यं सुकृतशतफलामात्मनो यो विभूतिं
पर्षन्मध्ये विचित्रां प्रथयति महतीं धीमतां प्रीतिहेतोः।
बुद्धानां सर्वलोकप्रसृतमविरतोदारसद्धर्मघोषं
वन्दे सम्भोगकायं तमहमिह महाधर्मराज्यप्रतिष्ठम्॥
सत्त्वानां पाकहेतोः क्वचिदनल इवाभाति यो दीप्यमानः
सम्बोधौ धर्मचक्रे क्वचिदपि च पुनर्दृश्यते यः प्रशान्तः।
नैकाकारप्रवृत्तं त्रिभवभयहरं विश्वरूपैरुपायैर्—
वन्दे निर्माणकायं दशदिगनुगतं तन्महार्थं मुनीनाम्॥

त्रैलोक्याचारमुक्तं गगनसमगतं सर्वभावस्वभावं
शुद्धं शान्तं विविक्तं परमशिवमयं योगिनामेव गम्यम् ।
दुर्बोधं दुर्विचारं स्वपरहिततमं व्यापिनं निर्निमित्तं
वन्दे कायं जिनानां सुखमसमसमं निर्विकल्पैकमूर्तिम् ॥

जिता मे पापका धर्मा तेनोपगजिनो ह्ययमिति वचनाद् विजित-चतुर्मारत्वाज्जिनाः सम्यक्सम्बुद्धास्तेषां सुखं कायं वन्दे महासुखसञ्ज्ञ-कमाकाशवत्सर्वावरणरहितत्वेन प्रभास्वरम् । परमाक्षरसुखज्ञानलक्षणं चतुर्थं कायं नमस्करोमीत्यर्थः ॥ असमसममिति । निष्पन्दादिक्रमेण प्रकर्ष-पर्यन्तप्राप्तवैमल्यफलरूपत्वादसममसाधारणं श्रावकप्रत्येकबुद्धबोधिस-त्वसुखैः । सर्वधर्मैकरसत्वात्समम् । त्रैलोक्याचारमुक्तमिति । त्रैलोक्या-चारो हसितेक्षणादिलक्षणं सुखं तेन मुक्तं परित्यक्तम् । अन्यथा दिव्यमपि सुखं तत्त्वं भवेत् । उक्तं मूलतन्त्रे–

सुखं द्वीन्द्रियजं तत्त्वं देवानां रागिनां स्मृतम् ।
त्रैलोक्याचारनिर्मुक्तं बुद्धानां सुखमक्षरम् ॥
हसितेक्षणादिनिर्मुक्तं सर्वद्वन्द्वविवर्जितम् ।
कार्यकारणनिर्मुक्तं त्रैलोक्याभासमद्वयम् ॥

हसितेति पाण्याप्त्यालिङ्गनद्वन्द्वसम्भवैर्लोकाचारसुखैः स्पन्दैर्वाजितं परमाक्षरमिति । गगनसमगतमिति । गगनेन समा सदृशी गतिरव-बोधो यस्य स तथा । यथा गगनं व्यापित्वेन सर्वगतमपि न क्वचिद्वस्तुनि संसक्तं लक्षणवर्जितं च तथा भगवतोऽपि निःशेषज्ञेयविषयमपि ज्ञानं न कस्मिंश्चिद्धर्मप्रतिष्ठितं लक्षणवर्जितं चेत्यर्थः । यथोक्तमागमे–

अनाश्रितेन ज्ञानेन सर्वक्षेत्राणि पश्यसि ।
सर्वसत्त्वचर्रीं चैव निरालम्ब नमोऽस्तु ते ॥

ज्ञानसिद्धौ इन्द्रभूतिपादैश्च–

*अप्रतिष्ठं यथाऽऽकाशं व्यापि लक्षणवर्जितम् ।
उक्तं तत्परमं तत्त्वं वज्रज्ञानमनुत्तरम् ॥

इति । अन्यत्र च–

*Cp. Jñānasiddhi ( G. O. S. ) P. 36, verse 47.

अप्रतिष्ठं यथाऽऽकाशं व्यापि लक्षणवर्जितम् ।
अनिर्देश्यमरूपं च एतत्तत्त्वस्य लक्षणम् ॥

इति । अथवा गगनेन समगतिरवस्थाऽस्येति गगनसमगतिर्महासुखकायः । वर्णसंस्थानरहितत्वाद्गगनवत् सर्वाभासरहित इत्यर्थः । उक्तं च—

सर्वबुद्धेषु यः कायो निराभासो निराश्रयः ।
अजातोऽकृतकः शुद्धो भावाभावादिवर्जितः ।

इति । श्रीतन्त्रे स्फटिकमणिरिव ज्ञानवज्रं जिनस्येति ॥ चन्द्रगोमिपादैश्च—

यद्विशुद्धमिवाकाशमज्ञानतिमिराकुलैः ।
चन्द्रकैरिव सञ्छन्नं वस्तुभिर्वेद्यते जिनैः ॥

इति सर्वभावस्वभावमिति । भवन्ति हेतुप्रत्ययेभ्यः साकाशादिति भावाः । स्कन्धधात्वायतनादिकायाः स्थिरचलाः पदार्थाः सर्वे च ते शेषत्रैधातुकसंगृहीतो भावश्च तेषां स्वभावस्तदुत्पत्तितन्निष्ठत्वाभ्यां सत्तासत्तादिसर्वप्रपञ्चवर्जितमहासुखस्वभावतथतैकरूपत्वम् । उक्तं चार्यवज्रगर्भपादैः—

निर्विकल्पे मनसि नास्ति भावको न भाव्योऽस्ति ।
मन्त्रं नास्ति न देवताधिष्ठितो विद्यते नैव निष्प्रपञ्चस्वभावतः ।
तेनैव सहजनन्दस्वभावेन प्रत्यस्तमितसकलविकल्पकलङ्करूपेनेति ॥

चन्द्रगोमिपादैश्च—

तथता धर्मकायोऽस्य विकल्पानामगोचरः ।
स्वभावः सर्वसत्त्वानां सत्त्वार्थानां च सोऽन्वयः ॥
सत्त्वासत्त्वमनित्यत्वं ध्रौव्यं नानार्थमेकता ।
शुद्धाशुद्धी च बोधिश्च सर्वमत्र प्रकल्पितम् ॥
तरङ्गानामिवाम्भोधौ छायानामिव दर्पणे ।
स्वप्नानां मनसो वार्थे भावानां यत्र सम्भवः ॥
यद्विशुद्धमिवाकाशमज्ञानतिमिराकुलैः ।
चन्द्रकैरिव सञ्छन्नं वस्तुभिर्वेद्यते जिनैः ॥

मूर्तयो विश्वरूपस्य जगतस्तत्त्वरूपताम् ।
यत्रैकरसतां यान्ति निम्नगा इव सागरे ॥

सोऽयमेवंविधः कायो धर्मकायोऽस्य तायिनः ।
सर्वाकारविशुद्धायाः सम्बोधेरेव गोचरः ॥

इति । परिशुद्धसकलबुद्धधर्माणामाश्रयो हेतुः कायो धर्मकायः । शुद्धिरिति क्लेशमलैरसंस्पृष्टम् । शान्तमित्यष्टादशधातुविकाररहितम् । उक्तं चार्यवज्रगर्भैः । स्वरूपेण नास्ति रूपमित्यादि । स्वरूपं स्वसंवेदकं न द्रष्टा चक्षुर्विज्ञानम् । तथा न शब्देन श्रोता च न श्रोत्रविज्ञानम् । तथा न रसो नापि रसको न जिह्वाविज्ञानम् । एवं न स्पर्शो न स्प्रष्टा न कायविज्ञानम् । एवं न धर्मधातुर्न ग्राहको न मनोविज्ञानमिति । एवमष्टदशधातुविकाररहितं तत्त्वरत्नं तत्त्वयोगिना भावनीयमिति । विविक्तमिति । ज्ञेयसमापत्त्याद्यावरणात्पृथग्भूतमत एव सर्वोपद्रव-विरहादत्यन्तकल्याणात्मकत्वेन कल्याणहेतुत्वेन च परमशिवमयं योगिनामेव गम्यमिति । योगः षडङ्गयोगो लब्धोत्कर्षपर्यन्तः । स योगो येषामस्ति ते योगिनो महावज्रधरपदप्राप्ताः तेषामेव गम्यम् । ततो नापरप्रत्ययाधिगमतया प्रत्यात्मवेद्यतामस्य प्रकाशयति ॥ सादर-निरन्तरप्रवृत्तधूमादिमार्गभावनाप्रकर्षपर्यन्ताधिगम्यत्वाद्बालयोगिनां दु-र्बोधम् । श्रुतचिन्तामयज्ञानेनातिशयितप्रत्ययात्मानमप्यशक्यपरिच्छे-दत्वाद्दुर्विचारम् । स्वपरहिततममिति । सवासनासर्वावरणप्रहाणिलक्षण-स्वार्थसम्पद्योगादेकान्ते न स्वहितं विनेययथाशयं यथागोत्रं च तदधि-ष्ठानात्सम्भोगनिर्माणाभ्यां निःशेषपरार्थनिष्पत्तेरतीव परहितं चेत्यर्थः । प्रतिनियतदेशकालाभावादव्यापकं सर्वव्याप्येषु परचित्तादिवस्तुष्विति व्यापिनम् । कर्मज्ञानमुद्राहेतुरहितत्वान्निर्निमित्तम् । ग्राह्यग्राहकसंस्थान-कल्पनाद्वन्द्ववर्जितत्वान्निर्विकल्पा । परमार्थसत्यैकरूपत्वादेकाऽद्वितीया द्वितीयस्य संवृतिसत्यस्याभावादत्रेति निर्विकल्पैकमूर्तिः । आर्यपुण्ड-रीकपादैश्च—

सर्वाकारवरोपेतः कायो नानाधिमुक्तितः ।
दृश्यते स्वस्वभावेन सत्त्वैर्निर्माणलक्षणः ॥

सर्वसत्त्वरुतैर्ऋद्धिमात्मनो यः प्रकाशते ।
सत्त्वाशयवशेनैव कायः सम्भोगलक्षणः ॥
नानित्यो नापि नित्यो यो नैको नानेकलक्षणः ।
न भावो नाप्यभावोऽसौ धर्मकायो निराश्रयः ॥
शून्यताकरुणाभिन्नो रागारागविवर्जितः ।
न प्रज्ञा नाप्युपायोऽसौ कायः स्वाभाविकोऽपरः ॥

स्वदर्शनमतोद्देशे च–

रूपराशिरनन्तो मे निर्माणकाय उत्तमः ।
रुतराशिरनन्तो मे सम्भोगकाय उत्तमः ॥
धर्मराशिरनन्तो मे धर्मकायः प्रकीर्तितः ।
सुखराशिरनन्तो मे सुखकायोऽक्षरः परः ॥
पिण्डो राशिस्तथा कायः सञ्चयः परिकीर्तितः ।

अभिसमयालङ्कारादिष्वपि स्वाभाविकसम्भोगाभ्यां भेदेनैव धर्मकायो व्यवस्थाप्यते । प्रकृतमुच्यते लब्धोपदेशस्यादावनुकुलकर्ममुद्रा । समापत्त्याधिमात्राधिमात्रविकल्पक्षयान्मृदुमृद्वक्षरसुखवृद्धिः । एवं विश्वमात्रादिदेवीज्ञानमुद्रालम्बनेनाधिमात्रविकल्पापचयान्मृद्वक्षरसुखवृद्धिः । उक्तं च श्रीतन्त्रे । सेव्यादौ कर्ममुद्रा जिनसहजसुखस्यास्य वृद्ध्यर्थहेतोस्तस्मादादित्यरूपा सुखकरचरणोष्णीषसर्वाङ्गपूर्णेत्यादि । आदिशब्दान्महामुद्रायाः । पूर्वरूपधूमादिबिम्बधर्ममुद्रालम्बनेन मृदुक्लेशक्षयादधिमात्राक्षरसुखवृद्धिः । पश्चाद्रूपविश्वबिम्बाख्यमहामुद्राभ्यासेन मृदुमृदुसवासनावरणापचयादधिमात्राधिमात्राक्षरसुखवृद्धिः । ननु प्रक्षेपापचयोज्झितमक्षरसुखं कथं वृद्धिं यातीत्याह । वृद्धस्य न हि वृद्धिः स्यादिति । क्रमभाविनी ह्यवधौतकनकाकाशशुद्धिवदावरणप्रहाणवृद्धिः । सा च वृद्धस्य सवासनासर्वावरणप्रहाण्या वैमल्याख्या पूर्णावस्थात्मकवृद्धियुक्तस्य न स्यात् । एवं क्रमभाव्यावरणाय च येन पुनः क्षीयते तत्तस्य क्षीणस्य या क्षीणता कल्प्यते सापि नास्ति नित्योदितत्वात् । एवं तर्हि वृद्धिक्षययोरभावात्कथं न मार्गादिवैकल्यमित्याह । स्वभावाभावधर्माणामिति । स्वभावस्याभावो येषां वृद्ध्यादीनां धर्माणां ते स्वभावाभावधर्मास्तेषां

य उत्पादः क्षयश्च स मायैव न तत्त्वात्। तथाशब्दादस्तमनोदयादिलक्षणापि लोकसंवृतिर्मायैव ॥ तदाह। न क्षयं यान्तीत्यादि। नोत्पद्यन्ते स्वभावतोऽत एव।

निःस्वभावमिदं विश्वं भावाभावैकलक्षणमिति।

संवृत्त्यर्थक्रियाकारित्वाद्भावरूपम्। तत्त्वतः शून्यत्वादभावलक्षणम्। क्षरस्पन्दादिभावनामाह। स्वप्रज्ञेत्यादि। कर्ममुद्रादिस्वप्रज्ञालिङ्गितं बोधिचित्तं वज्रमणिपद्मगतं यदा तत्र वज्रमणौ चन्द्रागता कर्ममुद्रयाक्षरसुखावस्था। ज्ञानमुद्रया स्पन्दसुखावस्था। स्पन्देति स्रावसाधर्म्यक्षरस्यापि संग्रहः। एते सुखावस्थे साक्षात्कृते कामरूपधात्वैश्वर्यलक्षणलौकिकसिद्धिसाधने। महामुद्रया निष्पन्दाक्षरभावना तु सर्वज्ञत्वलक्षणलोकोत्तरसिद्धिसाधनी ॥ कायवाक्चित्तनाडीष्वित्यादिमध्यमैवानन्दचतुष्टये प्राणायामबलेन शुक्रेन्दुव्याप्तचतुर्भागश्चतस्रः कायादिनाड्यो व्यवस्थाप्यन्ते। तत्र ललाटे कायभावना हृदि वाग्भावना गुह्ये चित्तभावना। कायादिबिन्दूनां समाहार एकत्वं वज्रमणौ ज्ञानभावना सार्धश्लोकद्वयेन समाध्यङ्गमुद्दिष्टम्। चतुर्बिन्दूनां बन्धनमाह। प्रज्ञेत्यादि। प्रज्ञारागद्रुतानां चण्डालीज्ञानेन द्रुतानां बिन्दूनामुक्तक्रमेण शिरसो ललाटात्पूर्णस्थानम्। मणिपद्मं तत्प्रविष्टानां मणिपद्मगानां बन्धनं परमार्थत इति प्राणबन्धेनाक्षरसुखेन तत्त्वभावनयेति यावदुक्तक्रमेणाक्षरसुखस्य वृद्धिक्षयादिकमतात्त्विकं प्रतिपाद्य लौकिकदृष्टान्तेन तदेव दृढयति। यथोदित इत्यादि। यथोदितश्चन्द्रः क्रमात्कलाभिः पूर्णतां याति। पूर्णचन्द्रस्य लोकस्य वासनाहरणमेव केवलं पूर्णा। न तस्य छेदः पूरणं वा स हि नित्यपूर्णोऽपि तमःपिधानापिधानाभ्यां क्षीणः पूर्णश्च व्यवह्रियते। तथाक्षरज्ञानमपि वज्रमणावुदितं क्रमान्निःस्पन्दादिभेदेन वक्ष्यमाणभूमिभिर्मुदिताद्याभिरूर्ध्वमुष्णीषचक्रे पूर्णतां याति ॥ क्लेशादीनि क्लेशज्ञेयसमापत्त्यावरणवासनाया हरणमपगम एव पूर्णशब्देन व्यपदिश्यते। न ज्ञानछेदो न च तस्य पूरणम्। तदुक्तमागमे—

नित्योदितं तु बुद्धानां नाविद्यादुष्टचेतसाम् ॥

सरहपादैश्च—

जयति सुखराज एकः कारणरहितः सदोदितो जगताम् ।
यस्य च निगदनसमये वचनदरिद्रो बभूव सर्वज्ञः ॥

पूरणे दृष्टान्तमुक्त्वा छेददृष्टान्तमाह । यथा मध्येत्यादि । यथा मण्डलमध्यगतः सबीजभूताङ्कुरूपेण शशेन क्रमवर्धमाणेन पूर्णायां न स्थिरः शशी न नित्यपूर्ण इत्यर्थः । तथा संसारवासना या क्षरसुखलक्षणा तस्याः क्रमवृद्ध्या चित्तमप्यक्षरे सुखे न स्थिरम् । रागविरागं जन्मनिरोधादेरभावादद्वयमक्षरसुखम् । बाह्याध्यात्मश्लेषव्याजेन दृष्टान्तं दर्शयन्नाह । उत्पत्तिरित्यादि । यथेन्दोः प्रतिपत्कलानां क्रमेणोत्पत्तिः शुक्लपक्षः । कलानां क्रमेण हानिः कृष्णपक्षः । तौ प्रतिष्ठितौ लोकगम्यौ तन्मध्यगा तु षोडशी कला । एकक्षणोदयान्न तथा । तथा शुक्रेन्दोः । यदा तु योगिनां बोधिचित्तमणिः पूर्णायामेकक्षणेऽक्षरमभिसम्बुद्धं सततन्निश्चलं भवेत् । तदा तच्चित्तवज्रं वज्रमणौ निष्पन्देन सर्वक्षणपूरकमिति द्वयुतद्व्यष्टशतश्वासक्षणानां पूरकमविच्छेदवाहि । उक्तं च परमार्थसेवायाम्—

नक्तन्दिनं ध्यानवशात्क्रमेण चित्तं यदा तिष्ठति मध्यनाड्याम् ।
अनन्तमूर्तिः सुविशुद्धमद्वयं तदेकशूलं कुलिशं नमामि ॥

एवमस्य चित्तवज्रस्य न शुक्लपक्षे रागे स्थितिर्न च गमनमसिते पक्षे विरागे रागारागान्ताभ्यामपगतत्वात् । अत एव पक्षद्वयस्य मध्यस्थं पूर्णायां गतमद्वयमप्रतिष्ठितम् । तदुक्तं नामसङ्गीत्याम्—

एकक्षणाभिसम्बुद्धः सर्वक्षणविभावकः ।
अकलः कलनातीतश्चतुर्थध्यानकोटिधृगिति ॥

हेवज्रेऽपि—

आइ ण अनन्त मज्झणाहि नउ भव नउ निब्बाण ।
एहु सो परममहासुहउ नउ पर नउ अप्पाण ॥

संसारिकक्रमामाह । तस्येति बीजभूतस्येन्दोः षोडशानां कलानां पूर्णत्वाद्वज्रमणौ पूर्णा । किंत्वनुपायेन स विरागाद्रागनाशयोगात् कलाहानिः पञ्चदशानां कलानां नाशः वज्रादारभ्य हाने रजोरूप-

रवेरुष्णीषे प्रपूर्णता ॥ भूयः पुनः पुनः कर्ममुद्रादियोगेनोष्णीष उदयः। पुनर्वज्रमणौ पूर्णता स विरागात्कलाहानिर्ज्ञानहानिर्न देहिनां ज्ञानं षोडशी कला तस्यास्तु न हानिः। उक्तं च तथागतज्ञानगर्भाः सर्वसत्त्वा इति। किं च ज्ञानहान्या मरणमेव स्यात्। पूर्णाशब्दस्यार्थमाह। महासुखेत्याद्यस्य बोधिचित्तस्य महासुखस्वभावो यः स पूर्णा भण्यते इयमेव योगिभिः स्थिरीकरणीया। महासुखस्थिरीकरणं विहायान्यभावान्तरं तस्य महासुखस्योत्पादव्ययलक्षणसृष्टिसंहारहेतुकं देहिनां पूर्णायामस्थिरीकृतो ह्यसौ सुखेन्दुः पुनः पुनरुत्पद्यते नश्यति च। अत्र दृष्टान्तमाह। स्वपक्षाभ्यामित्यादि यथा शुक्लकृष्णपक्षाभ्यां चन्द्रः। उत्तरदक्षिणायनाभ्यां रविः। दिवा वृद्धिक्षयरूपरविवृद्धिक्षयदर्शनात्। भावनाबलेन तु पूर्णायां स्थिरस्यास्य महासुखस्य क्रमेणोष्णीषे द्वादशभूमिभिः परिपूर्णता गुह्यादुष्णीषान्तं प्रतिचक्रेऽक्षरक्षरणनिरुद्धषट्त्रिंशच्छतश्वासैर्द्विद्विभूमिलाभः। तदक्षरं यदोदयरूपरागविरागपक्षद्वयातिक्रमात्। पक्षद्वयोज्झितं तदा भूमिभिः पूर्णम्। द्वादशाकारसत्यार्थम्। षोडशाकारम्। तं निर्दिशति। भूमिभिरित्यादि। भूमिभिः। समन्तप्रभा। अमृतप्रभा। वज्रप्रभा। रत्नप्रभा। पद्मप्रभा। बुद्धकर्मकरी। अनुपमा। उपमा। प्रज्ञा। प्रभा। सर्वज्ञता। प्रत्यात्मवेद्यानामिति द्वादशाकारं मेषवृषादिद्वादशसङ्क्रान्तिनिरोधात् द्वादशभूमिलाभतः। परमाद्वयम्। प्रज्ञोपायलक्षणस्याभावात्। न प्रज्ञा नाप्युपायः। सहजतनुरियमिति श्रीतन्त्रेऽभिधानात्। षोडशाकारमक्षरम्। सांसारिकषोडशकलाक्षयतः। इदं समन्तात्कलाभिः पूर्णं चित्तमेकार्थादि यथार्थदर्शनात्मकं यद्द्वयधर्मं तदेकार्थमुभयपक्षाभावात्। विरागादिमहारागमिति सेकक्षणश्चतुर्थः। तदुक्तं नामसङ्गीत्याम्—

विरागादिमहारागो विश्ववर्णोज्ज्वलप्रभः।
स बुद्धो वज्रपर्यङ्को बुद्धसङ्गीतिधर्मधृक् ॥

इति। तच्च रागविरागपक्षद्वयवासनाभिरसंक्लिष्टम्। तस्मिन्नक्षरे प्रविष्टो भावग्रामोऽक्षर इति। अक्षरविद्याधरशास्तरि सुखमयसर्वाकारसर्वभावप्रतिभास इत्यर्थः। यथेति दृष्टान्तः स्पष्टोऽपरोऽपि दृष्टान्तार्थः। यथाभ्रकादिधातुग्रामो रसभक्षितो रसतां याति। स्वर्णादि-

बीजैश्च जीर्णैर्बीजताम् । अष्टलोहवेधलक्षणफलकाले जारिताधिकको-
ट्यादिवेधत्वेन मानोज्झितमेवमिति दार्ष्टान्तिकमेवं भावसमूहोऽपि
स्थिरचलात्मकः परमाक्षरभक्षितः परमाक्षरत्वं प्रकृतिप्रभास्वरगगनामल-
महासुखैकरसतां याति । ततश्च सर्वाकारस्वरूपधृग्भवति । सर्वभावप्र-
तिभासरूपत्वात् । विषदृष्टान्तेन निर्विकल्पमहासुखस्य व्यापित्वमाह ।
न दंश इत्यादि । पूर्णावस्थां व्यापित्वं गते विषे दष्टको दंशस्थाने
वेदनादुःखं न वेत्ति न चान्यत्रापि कुत्रचित्कायस्थाने न च विषयान्
रूपादीनिन्द्रियद्वारैर्वेत्ति । एवं चित्ते पूर्णकलां गते व्यापित्वं गते न
योगी वज्रमणौ वेत्ति सत्सुखं नान्यत्रापि । न विषयानिन्द्रियद्वारैरिति ।
एकदेशस्थितमपि रोमकूपसन्धिपर्यन्तं क्रमतीति सिद्धरसं लोहदृष्टान्ते-
नाह । एकदेशे वज्रमणौ स्थिरीकृतं सुखं कर्तृकर्ममुद्रादियोगेन ज्वलि-
तचण्डालीज्वालया सन्तप्तं चित्तं कायसर्वतो वेधयेत् । तन्मयत्वापाद-
नात् । यथेत्यादिश्लोकद्वयं स्पष्टम् । वासनारागादिक्लेशानां यथेति । अस्ति
कश्चिन्महामणिर्यत्स्पर्शात् शिला प्रदीप्ततां प्रभास्वररत्नतां याति । दा-
र्ष्टान्तिकस्य स्पष्टं वै निश्चितं कथं बालजनसाधारणोऽपि शुक्रधातुर्बु-
द्धत्वसाधनमित्याशङ्कानिरासार्थमाह । किमत्रेत्यादि । किं पुनः परमा-
र्थतः परमार्थसत्यतो ज्ञानस्य सद्भावः । प्रभावो वितर्क्यो विचार-
णीयश्चित्तस्यावेधनं प्रतिमलागन्तुकलिप्तस्य नैवेत्यर्थः । क्लेशादीनां
तात्त्विकतां नेत्यादि श्लोकत्रयेण निषेधयति । ते तावन्नागन्तुकाः ।
वीतरागस्यापि रागित्वप्रसङ्गात् । नापि चित्तात्प्राग्भाविनः । हेतोर-
भावात् । चित्तविठयिता हि क्लेशादयो नाप्यहेतुकाः खकुसुमादि-
वदकिञ्चित्करत्वात् । नापि स्वभावभूताः क्लेशा अविनाशप्रसङ्गा-
त्प्रहाणौ वा प्रदीपवन्निर्वाणप्रसङ्गात् । अत्र ताम्रदृष्टान्तेन बोधयति ।
यद्ययमागन्तुको मलस्ताम्रे तदा पूर्वं ताम्रं कलङ्करहितं यदा
चिरकालिकमलः पश्चात्ताम्रस्य सद्भावस्तदा मलस्य तस्य कुतः
कस्मात्सम्भवः । अथ ताम्रेण विना जातस्तदाकाशकुसुमस्यापि
सम्भवः । अथ ताम्रेऽव्ययत्वेन संस्थितस्तदा सिद्धरसेनाप्यपनेतुं न
शक्यते तस्मात्सर्वमेतद्युक्त्या न सङ्गच्छते तस्मादिदमत्रार्थसत्यम् ।
ताम्रेण सहोत्पन्नोऽयं कलङ्को रससंयोगान्नश्यति न पूर्वं न पश्चान्न

तद्वदित इति निर्मलत्वेन स्वर्णत्वेन स्थिता सत्त्वता। एवं चित्तस्यापि दर्शयति। तद्वदित्यादि। शून्यताधूमादिमार्गज्ञानताप्रत्यात्मवेद्यत्वम्। उक्तं चार्यनागार्जुनपादैर्धर्मधातुस्तवे–

निर्मलौ चन्द्रसूर्यौ ह्यावृतौ पञ्चभिर्मलैः।
अभ्रनीहारधूमेन राहुवक्त्ररजोमलैः॥
एवं प्रभास्वरं चित्तमावृतं पञ्चभिर्मलैः।
कामव्यापादमिद्धेन औद्धत्यविचिकित्सया॥
अग्निः शौचं यथा वस्त्रं मलिनं विविधैर्मलैः।
अग्निमध्ये यथाक्षिप्तं मलं दग्धं न वस्त्रता॥
एवं प्रभास्वरं चित्तं मलिनं रागजैर्मलैः।
ज्ञानाग्निना मलं दग्धं न दग्धं तत्प्रभास्वरम्॥
शून्यताहारकाः सूत्रा ये केचिद्भाषिता जिनैः।
सर्वैस्तैः क्लेशव्यावृत्तिर्नैव धातुविनाशनम्॥
पृथिव्यन्तर्हितं तोयं यथा तिष्ठति निर्मलम्।
क्लेशैरन्तर्हितं ज्ञानं तथा तिष्ठति निर्मलम्॥

उक्तं आर्यदेवपादैश्च। तमोऽपगतं क्षणात्प्रभास्वरमतिस्वच्छं सततालोकस्वभावं परमार्थसत्यलक्षणम्॥ ज्ञानचक्षुषा पश्येदिति। ज्ञानस्वभावं प्रभास्वरमिति च॥ रसेत्यादिश्लोकेन मुक्तस्य पुनः संसाराभाव उक्तः। नेत्यादि। पापं रागविनाशतः प्रियतमाद्वेषो यतो जायते। द्वेषान्मोह इतः स्ववज्रपतनाच्चित्तस्य मूर्छः सदाऽन्यस्मिन्विषये प्रवृत्तिरखिलासत्स्वानपानादिके। चित्तं तेन विडम्बितं हतसुखं षड्जन्मसु भ्रश्यते। पापं रागविनाशतः करुणाक्षयात्मकत्वात्। एतदेव कस्माद्धेतो यस्मात्प्रियतमायां सत्कामिन्यां द्वेषः प्रेमनाशो मैत्रीक्षयात्मको जायत इति प्रत्येकमभिसम्बध्यते। द्वेषान्मोहः संहर्षनाशो मुदिताक्षयात्मको मूर्छा सुखनाशलक्षणा। उपेक्षाक्षयात्मिकेति चतुर्ब्रह्मविहाराभावात्पापमेव कुतः पुण्यमिति। ननु रागवृद्धिलक्षणा करुणा द्वेषनाशात्मिका मैत्री मोहक्षयात्मिका मुदिताऽक्षरसुखात्मिकोपेक्षेति किमेतदप्यस्ति बुद्धकपाले यथादृष्टियुक्ता भवेत्करुणामैत्र्यालिङ्गनस्य च। संघृष्टियोगात्मा मुदिता वराङ्गनायास्तथा। उभयमेलापके

यदीक्षणमुपेक्षा सा स्मृता मया। एवं भवयोगयुक्तस्य कथं रागेण बध्यत इति। वेशनीयमिति मार्गभावनया। वाक्पथातीतत्वमक्षरसुखस्याह। वक्तुं नेत्यादि यौवने सुरतं प्राप्य स्वयमेव वेत्ति। समाधिरहितैः। शून्यतासमाधिरहितैर्विरागे मनसोऽसुखम्। असुखाद्धेतोर्विरागो न कर्तव्यः। च्युतिरेव परम्परया संसारहेतुरिति दर्शयति। च्युतेरित्यादि। एवमित्युक्तक्रमेण सत्त्वानां विरागसम्भूतिः। नान्यथेति। यदि तेषां च्युतिहेतुका विरागसम्भूतिर्न भवति। तदा नान्यप्रकारेण तेषां भवः संसारः। तस्माच्च्युतिरेव कारणमित्यर्थो यत एवं तस्माच्च्युतिरागं विवर्जयेत्। यथा पञ्चलक्षाभिधाने—

क्षराविद्यानिरोधेन संस्कारस्य निरोधनम्।
संस्कारस्य निरोधेन विज्ञानस्य निरोधनम्॥
विज्ञानस्य निरोधेन नामरूपनिरोधनम्।
नामरूपनिरोधेन षडायतनरोधनम्॥
षडायतननिरोधेन स्पर्शस्य निरोधनम्।
स्पर्शस्य च निरोधेन वेदनाया निरोधनम्॥
वेदनाया निरोधेन तृष्णायाश्च निरोधनम्।
तृष्णायाश्च निरोधेनोत्पादस्य निरोधनम्॥
उत्पादस्य निरोधेन भवस्यापि निरोधनम्।
भवस्यापि निरोधेन जातेरपि निरोधनम्॥
जातेरपि निरोधेन जरामरणरोधनम्।
निरोधः स्कन्धधातूनां सैवोपशमनं स्मृतम्॥
एवं कायनिरोधेन प्राणस्यापि निरोधनम्।
प्राणस्य च निरोधेन बोधिचित्तनिरोधनम्॥
बोधिचित्तनिरोधेन च्यवनस्य निरोधनम्।
च्युतिक्षणनिरोधेन बुद्धत्वं सर्वदेहिनाम्॥
एवं क्लेशनिरोधेन कर्मणोऽपि निरोधनम्।
कर्मणश्च निरोधेन दुःखस्यापि निरोधनम्॥

क्लेशोत्पादो भवेन्न। सः—

क्लेशोत्पादं विनोत्पादः कर्मणो नैव जायते।
तस्योत्पादं विनोत्पादो दुःखस्यापि न जायते॥

दुःखं विना सुखी योगी सत्त्वार्थं कुरुते सदेति ।

येनेति च्युतिसुखविवर्जनेन । कामुक इत्यादिनाऽक्षरसुखे यत्नमाह । दुःखं रागविरागलक्षणम् । शुक्रेत्यादि । यस्मादाधारे शुक्रे च्युते आधेयस्य सुखस्य विरागिताभङ्गस्ततः शुक्रस्यैवाक्षरत्वेन महासुखं साध्यं तावच्चायमाधाराधेयभेदो यावदुष्णीषे न पूर्णता । पूर्णतायां चित्तमक्षरतां प्राप्तं यदा तदा नाधाराधेयलक्षणम् । वैमल्यावस्थामाह । अक्षरेत्यादीहाक्षरं परमाक्षरसुखं ज्ञानं तस्मादुद्भवतीत्यक्षरोद्भवः कायः स्कन्धधात्विन्द्रियादिशरीरं यस्य तस्य परमाक्षरोद्भवकायस्योर्णाचक्रं ललाटचक्रं तद्वामित्वेनोष्णीषगा षोडशी कला सामर्थ्यादुक्ताऽस्याधेयः । अकारादिस्वरपरिणतश्चन्द्रः कादिव्यञ्जनपरिणतः सूर्यस्तयोः सम्पूटेनाधार आलिकाल्योर्वामदक्षिणयोर्वा समायोगो मीलनं मध्यमाप्रवाहित्वं नापि हूँकारादिपरिणतं मण्डलनायकरूपमाधेयं किं तूष्णीषमणिवरटकस्थचन्द्रसूर्यावाधारः सर्वव्यापिमहासुखरूपमाधेयम् । तदुक्तं विमलप्रभायाम्—

एकं पदं वज्रमणौ रजोऽर्के उष्णीषशुक्रे शशिनि द्वितीयम् ।
अभ्यस्तं सदाऽछेद्यमभेद्यमिष्टं भर्तुस्त्रिलोकसहितं शिरसा प्रणम्येति ॥

भर्तुर्बोधिचित्तवज्रस्य श्रीकालचक्रस्य । पद्यते गम्यते येन तत्पदं ज्ञानमक्षरम् । अभ्यस्तमारोपितमविद्यानिरोधाय वज्रमणावप्रतिष्ठितनिर्वाणभूमौ रजोर्के महीमण्डतले ज्ञानधातावेकं यद्दक्षिणमित्येकपादतलाक्रान्तः । उष्णीषे भवसुखातिक्रान्ते शुक्रे शशिनि पादाङ्गुष्ठनखे प्राकामकलोदयात्मके विज्ञानधातौ द्वितीयं यद्वाममिति । ब्रह्माण्डशिखराक्रान्तः सदा कालत्रये क्लेशावरणातिक्रान्तत्वादविद्याऽज्ञानकर्त्तिकयाऽछेद्यं विज्ञानधर्मतातीतत्वाद् ग्राह्यग्राहककोट्याऽभेद्यं-महासुखरूपत्वादिष्टं कृतकृत्यस्थले मणौ स्थितं लोकाचारोज्झितत्वात्-त्रिलोकसहितम् । संसारपरकोटावुष्णीषे स्थितमिति । एतदुक्तं भवति । यदूर्ध्वाधो निरुद्धषण्णाडिकास्वभावषड्धातुको ज्ञानकायो भगवांस्त्रैधातुकवन्दितचरणारविन्दः शुक्लकृष्णपक्षस्य भवति भवात्मकस्य निरावरणतया द्विपञ्चदशशून्यताकरुणात्मकाभ्यां पादाभ्यां चन्द्रसूर्यस्वरूपाभ्यां संसारनिर्वाणमार्गावरोधकाभ्यां पूर्णिमाममावस्यामभिव्याप्तवाञ्जगदेकभर्ता । तस्य पदं प्रणम्येति । परमाक्षरज्ञानसिद्धौ

त्वक्षरशब्देन परमाक्षरसुखज्ञानं वज्रसत्त्व इति। तथा मनस्त्राणभूतत्वा-न्मन्त्रोऽपि परमाक्षरज्ञानमुच्यते। मूलतन्त्रे च–

कायवाक्चित्तधातूनां त्राणभूतो यतस्ततः।
मन्त्रार्थो मन्त्रशब्देन शून्यताज्ञानमक्षरम्॥
पुण्यज्ञानमयो मन्त्रः शून्यताकरुणात्मकः।

इति। तथाऽपराध्यात्मिका विद्या प्रज्ञापारमिता प्रकृतिप्रभास्वरा महामुद्रा सहजानन्दरूपिणी धर्मधातुनिष्पन्दपूर्णावस्था सहजतनुरित्यु-च्यते जिनैः। तौ प्रतीत्यसमुत्पन्नानामिन्द्रियाणामगोचरौ। दिव्येन्द्रिय-गोचरौ वज्रसत्त्वबुद्धमातरौ परमाक्षरसुखस्वभावौ परमाणुधर्मतातीता-वादर्शप्रतिसेनास्वप्नतुल्यौ परमाक्षरस्वरूपाविति। अत्राक्षराणि रूप-वेदनासञ्ज्ञासंस्कारविज्ञानानि। निरावरणानि पञ्चाक्षरमहाशून्यान्यु-क्तानि। तथा पृथिव्यप्तेजोवाय्वाकाशधातवो निरावरणाः पञ्चाक्षरा-ण्युक्तानीति। षडक्षराणि चक्षुःश्रोत्रघ्राणजिह्वाकायमनांसि निरावरणानि प्रत्येकं स्वस्वाविषयग्रहणविवर्जितानि। तथा रूपशब्दगन्धरसस्प-र्शधर्मधातवो निरावरणाश्च षडक्षराण्युक्तानीति। एतानि स्कन्धधात्वा-यतनान्येकसमरसीभूतानि। बिन्दुशून्यो भवति स च बिन्दुरच्युतः सन् परमाक्षर उच्यते परमाक्षरोऽप्यकारः। अकारसम्भवः सम्यक्स-म्बुद्धः प्रज्ञोपायात्मको वज्रसत्त्वो नपुंसकपदं सहजकाय इत्युच्यते। ज्ञानज्ञेयात्मको हेतुफलयोरभेदत्वात्। स च कालचक्रो भगवान् परमाक्षरः सुखपदम्। उक्तं च नामसङ्गीत्याम्–

सर्वमन्त्रार्थजनको महाबिन्दुरनक्षरः।
पञ्चाक्षरो महाशून्यो बिन्दुशून्यः षडक्षरः॥

मूलतन्त्रे च–

अकारसञ्ज्ञकः प्रोक्तो धर्मधातुर्महाक्षरः।
वज्रयोनिर्जिनेन्द्राणां कायवाक्चित्तकारणम्॥
तद्यथा भगवान् बुद्धः सम्बुद्धोऽकारसम्भवः।
अकारः सर्ववर्णाग्र्यो महार्थः परमाक्षरः॥
महाप्राणो ह्यनुत्पादो वाक्यताहारवर्जितः।
सर्वाभिलापहेत्वग्र्यः सर्ववाक्सु प्रभास्वरः॥

कायवाक्चित्तनिष्पत्तिस्त्रिवज्राभेद्यधर्मिणी ।
यस्याः सा जिनकायानां वज्रयोनिः प्रगीयते ॥
सर्वैश्वर्यादिधर्माणां बुद्धानामुदयो यतः ।
स धर्मोदय आख्यातः पुण्यज्ञानमयः परः ॥

इति । इयता च समाध्यङ्गमुद्दिश्येदानीं संवृत्या हेतुफलभावमाह । बिम्बमित्यादि । शून्यादाकाशाद्भूतं बिम्बं सर्वाकारलक्षणं हेतुः कारणम् । शुक्राक्षरजं सुखं फलं फलेनानास्रवसुखेन मुद्रितः सुखरूपः कुतः । हेतोरपि सुखरूपत्वात् । हेतुना चैवंभूतेन मुद्रितम् । अनास्रवसुखं तस्यापि निरालम्बशून्यतात्मकत्वात् । एतद्द्वयं शून्यताकरुणालक्षणमित्याह । शून्यतेत्यादि । सालम्बशून्यताबिम्बधृक्चित्तं हेतुः । अनालम्बकरुणाक्षरधृक् फलम् । अनयोः शून्यताकरुणयोर्यदभिन्नत्वमेकत्वलक्षणं बोधिचित्तं तदच्युतमुच्यते । नान्यत्कर्मज्ञानमुद्राजनितं क्षरस्पन्दलक्षणम् । एतच्चोच्छेदसंसाररहितमित्याह । निर्वाणेन तुच्छरूपेण रहितं बिम्बं संसारेण क्षरसुखलक्षणेनातीतमनास्रवमहासुखमक्षरम् । तयोरक्षरबिम्बयोर्योगोऽद्वयोऽपर उत्कृष्टः ।

अत एवाह । शाश्वतोच्छेदनिर्मुक्तमिति । अत्रोपपत्तिमाह । अभाव इत्यादि । बिम्बस्य सर्वाकारस्वचित्ताभासस्याभाव उच्छेदो नास्ति कुतः । अभावोद्भूतलक्षणात् । अभावाच्छून्यात्केवलामलनभस्तलादेव प्रत्यात्मवेद्यस्य त्र्यध्वत्रैधातुकप्रतिभासस्योत्पत्तेः । वक्ष्यति चात्र मूले गगनोद्भवबिम्बेन सेवितेन तथात्मन इति । अक्षरस्यानास्रवसुखस्य न भवोऽस्ति कुतः । भावसम्भूतलक्षणात् । प्रतिभासमानबिम्बलक्षणभावसम्भूतत्वात् । एतच्च प्रज्ञाहेतोरजातत्वादित्यादिना स्फुटयिष्यति । यद्वा मणेरूर्ध्वगशुक्ररूपभावाल्लोकविलक्षणनिरास्रवसुखस्य सम्भूतेः । अभावभावावुक्तलक्षणे शून्यताकरुणयोरनयोर्बिम्बं संवृतिपरमार्थसत्यस्वभावयोः संयोगो मीलनं वज्रयोगः । सचाद्वयो युगनद्धाख्योऽक्षरश्चेति । एतदेव तत्त्वम् ।

तदुक्तमार्यदेवपादैः सूतके यद्भूतं तत्तत्वं किमेतद्भगवन् भूतं नाम । यदविसंवादकं तद्भूतम् । किमेतदविसंवादकं नाम । यो भूतनयात्मकः समाधिस्तदविसंवादकम् । क एष भूतनयात्मकः समाधिर्नाम यत्सत्य-

द्वयाऽद्वैधीकारलक्षणम् । स भूतनयात्मकः समाधिः । किमेतद्भगवन् सत्यद्वयं नाम । प्रथमं संवृतिसत्यं द्वितीयं परमार्थसत्यं चेति । अत एव रूपारूपविनिर्मुक्त इत्युच्यते । प्रतिसेनायां हि दर्पणाद्युपलभ्यमानशरीरायां न रूपलक्षणं परमाणुद्रव्यसन्दोहाभावात् । नारूपलक्षणमुपलभ्यमानस्य दुरपक्रमत्वात् । तस्मान्न बिम्बं भवं संसारमायाति निर्वाणमुच्छेदं याति नाक्षरमन्योन्यालिङ्गितम् । शान्तमविकारीन्द्रियविकाररहितत्वादिदमेवोभयात्मकं नपुंसकपदं केवलप्रज्ञोपायपक्षयोरभावात्परमुत्कृष्टं सकलजगदसाधारणत्वान्ननु महामुद्रासमुत्पन्नत्वात्सहजस्य हेतुजत्वं महामुद्रायाश्च हेतुत्वमेवं हि हेतुः फलं च द्वयमप्यनतिक्रान्तमतः कर्ममुद्रा ज्ञानमुद्रा च हेतुरस्तु महामुद्राया अपि को वै विशेष इत्याह । प्रज्ञेत्यादि प्रज्ञा बिम्बलक्षणा सर्वाकाराऽवबोधरूपिणी सर्वधर्मशून्यता सा च हेतोः सकाशान्न सम्भूता न जाताऽकृतत्वात्प्रकृतेः परमार्थतो यदपि-प्रज्ञाहेतूद्भवं फलं प्रज्ञाजातमित्यभिधीयते तदपि न हेतुजमिति प्रज्ञाहेतुजं न भवति कुतः प्रज्ञाहेतोर्न जातत्वात्प्रज्ञाया अहेतुजत्वात्फलमपि सहजाख्यं कथमिव हेतुजं भवितुमर्हति प्रागेव हेतुकथाया निरासात् ।

अतोऽस्मात्करणाद्यदक्षरं ज्ञानं तत्प्रज्ञाज्ञानं न हेतुजं ततश्च हेतुफलभावाभावात्फलेनैव हेतुर्मुद्रितो हेतुनैव वा फलमित्यन्योन्यमपि न भवति । फलेनापि हेतुर्मुद्रितो हेतुनापि फलमिति परस्परमपि न भवति कुत इत्याह । हेतुरित्यादि । यतो हेतुफले प्रतीत्यसमुत्पन्नत्वात्संवृते तस्य लोकोत्तरत्वेनानादिनिधनत्वात् । अतोऽन्योन्यमुद्रितमुभयाभिन्नयुगनद्धाख्यं बिम्बं नोत्पन्नं न च निर्वृतमुत्पादव्ययरहितम् । उक्तं च । उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवैषा धर्माणां धर्मतेति । यतश्चोभयाभिन्नबिम्बस्य प्रज्ञाभाग आदिशान्तत्वान्नित्यानुत्पन्नः । उपायभागस्तु प्रत्यात्मवेद्यत्वात्सदोदित एव । ततोऽपि न हेतुफलत्वं नापि परस्परमुद्रणम् । अन्योन्यमुद्रितत्वे युक्त्यन्तरमाह । अजातस्येत्यादि । ज्ञानाकारव्यतिरिक्तस्य बाह्यस्यासम्भवात् । स्वचित्तमेव त्रैधातुकाकारतया बहिर्विभक्तमेवोपलभ्यते । न स्वचित्तादन्यद्योगिनस्तदानीं स्वपरविभागकल्पाभावात् । उक्तं च हेवज्रे—

स्वर्गमर्त्यैश्च पातालैरेकमूर्तिर्भवेत्क्षणात् ।
स्वपरभागविकल्पेन बाधितुं नैव शक्यते ॥

बाह्यज्ञेयविभाग इति। बाह्यज्ञेयं पृथक्कृत्वाऽतो नेत्याद्युपसंहारः। किं छिनत्तीत्यादिदृष्टान्तः। ननु महामुद्राया अजातत्वात् फलमप्यसम्भावि न ह्यनुत्पन्नस्य कस्यचिद्धर्मस्य किंचिदेव फलमनुभूयते कैश्चिदपीत्याह। बन्ध्येत्यादि। अनुत्पन्नाया अपि बन्ध्यादुहितुः संयोगे स्वप्नकाले सौख्यं यदनुभूयते। तदाकाशोद्भवबिम्बसेवनात्फलरूपं सहजसुखं योगिभिः संवेद्यत एव। न हि प्रज्ञोपायेन्द्रियानुत्पन्नं महामुद्रासमुत्पन्नमिवाकाशमिवावरणवर्जितं सर्वभूतस्थमतत्त्वविद्भिर्वेद्यते। ननु तथागतेनोक्तं स्कन्धधात्वायतनाभावे ऽीन्द्रियसंयोगरहितं प्रज्ञाज्ञानं स्वसंवेद्यं न भवत्यच्युतत्वात्। कथं स्वचित्तप्रतिभासे स्वचित्तेनानुषङ्गं कृत्वा स्वचित्तं निरावरणं करोति महाक्षरसुखज्ञानं चोपभुंक्ते। परमाणुसन्दोहशरीराभावात्। एतदेव विपरीतं देवदत्त आत्मनः स्कन्धमारुह्य ग्रामं गच्छतीति वाक्यवत्।

इह कस्यचिदभिप्रायो भविष्यति। तस्मादुच्यत इह हि यद्वक्तव्यं मूर्खैः परमाणुसन्दोहात्मकैः स्कन्धधात्वायतनैर्विना चित्तमात्रेण प्रज्ञाज्ञानं स्वसंवेद्यं न भवति तन्न कस्मादागन्तुकचित्तवासनावशात्। इह स्कन्धधात्वायतनं नामागन्तुकचित्तवासना तस्याः प्रसादेन चित्ते सुखदुःखचित्तवासना प्रविशति। परमार्थतो विचार्यमाणेनास्य शरीरस्य क्षुद्रोपद्रवः कश्चिदस्ति येन चित्ते दुःखं प्रविशति। इह सर्वलोकेषु प्रसिद्धं तस्यामेवावस्थायामन्यचित्तवासनात्मकं शरीरं परमाणुसन्दोहरहितं देशान्तरं व्रजत्प्रतिभासते। तस्य देशान्तरं व्रजतः शरीरे चौरादिभिरुपद्रवे कृते सति तेनोपद्रवेण चित्ते दुःखं प्रविशति तेन दुःखेनाक्रन्दति। तदिदं महदद्भुतं शरीरं विना चौरादिभिर्विना स्वसंवेद्यं दुःखज्ञानं प्रवर्तते। चित्तस्यैवं स्वप्ने महाकामोपभोगैश्चित्ते सुखं प्रविशति। तदेवाश्चर्यशरीरेण विना कामोपभोगैर्विना स्वसंवेद्यं सुखज्ञानं चित्तस्य प्रवर्तते सत्त्वानामिति। एतदेव पण्डितैर्विचारयितुं न शक्यते प्रादेशिकज्ञानमपि। किं पुनः संसारवासनातिक्रान्तं निर्वाणवासनोद्भूतं योगिस्वसंवेद्यं समन्तभद्रमहाक्षरसुखज्ञानं वितर्कयितुं शक्यते मूर्खैरिति।

यदपि प्रज्ञोपायाभिन्नमित्युच्यते तदपि परमार्थतो नास्तीत्याह। न प्रज्ञेत्यादि। न प्रज्ञा नाप्युपायः पृथग्भूतो राशिरस्ति येन तदभिन्नं

ोधिचित्तं स्यात्तस्या अवस्थाया बालयोगिभिरविज्ञेयत्वात्सहज इत्यपि ज्ञया धिया सहजतत्त्वादुच्यत आसमन्तात्सुखापूर्णावस्थालाभात्स- रावरणै रागादिक्लेशज्ञेयादिभिर्विरहितो निर्णयः। करादिस्पर्शा- भावात्। ग्राह्यग्राहकवैधुर्याद्विषयेन्द्रियवर्जितः सर्वव्यापकत्वात्सर्वतः सर्वाकारज्ञत्वात्सर्वभूतस्थः कालत्रयेऽपि परमाणुधर्मतातिक्रान्तत्वाद्- विद्याऽज्ञानकर्तिकयाऽछेद्यो विज्ञानधर्मतातीतत्वाद्ग्राह्यग्राहकोट्याऽभे- द्यत्वाद्भेदवर्जितः स्वयम्भूरित्यादिश्लोकत्रयं लोकोत्तरषट्सत्त्वोद्देशोऽनु- त्पादानिरोधत्वात्स्वयम्भूः। महार्थो जगदर्थकारित्वात्। गुह्यादुष्णीषा- न्तषट्चक्रे क्रमेण वज्रसत्त्वमहासत्त्वबोधिसत्त्वसमयसत्त्ववज्रयोगकाल- चक्रषण्णामकः। अस्य निर्देशो वज्रमित्यादिवज्रं शून्यबिम्बं तद्यस्मा- द्भेद्यं तस्मान्महार्थं महोद्देशो यः सत्वः कामधात्वादिरूपकायवाक्- चित्तैकत्वाख्यः स परमाक्षरमुद्दिश्यत इति वज्रसत्वः। यद्वा वज्रमभेद्यं कायवाक्चित्तैकरसं महासुखज्ञानं सत्त्वं त्रिभवस्यैकता ज्ञेयमाभ्यामैक्यं परमाक्षरं स महान्महासुखपूर्णत्वान्महाराग उद्दिष्टः।

स च सत्त्वो भूमिभिः पूर्णत्वात्सर्वसत्त्वरतिङ्कर उद्दिष्ट इति महासत्त्वः। यद्वा महच्छब्देनात्र परमाक्षरसुखं तेन पूर्णो यः सत्त्वो भूमिभिश्च स महासत्त्वः। यतोऽसौ बोधौ शून्यताकरुणात्मि- कायां धर्मचक्रे स्थितोऽचलस्थितः। क्लेशादिरूपद्वेषसंघानां विजयि- त्वान्महाद्वेषो महारिपुश्चोद्दिष्टः। ततः सत्त्व इति बोधिसत्त्वः। स यतः समयस्य चन्द्रामृताख्यशुक्रस्य सुखेऽच्युतिरूपं भक्षणं मोहवि- जयित्वान्महामोहो मूढधियां मोहघातकश्चोद्दिष्टस्ततः समयसत्त्वः। सैव यतः कायादिवज्राणां प्रज्ञया बिम्बेमाक्षरबिन्दुभिश्च सहयोग एकत्वम्। निर्जितक्रोधत्वान्महाक्रोधो माराविजयित्वात्क्रुद्धमाररिपुश्चोपदिष्ट इति वज्रयोगः। यतः स कालो महासुखं तस्मादुपायादपरित्यक्तचक्राख्या- न्तरसत्त्वार्थो भगवान्। अत एव सत्त्वान्मोचयित्वा महालोभः क्षरलो- भघातकश्चोपदिष्ट इति कालचक्रः। षण्णाडीरूपषडारचक्रेऽमी वज्रसत्त्वा- दयः प्रत्येकं षट्प्रकारास्तत्राधः शंखिनीरूपारेऽक्षरज्ञानं रसनारूपदक्षि- णारेऽक्षरवेदनाऽवधूतीरूपोर्ध्वारेऽक्षरविज्ञानम्। विण्णाडीरूपपश्चिमारे ऽक्षररूपम्। मूत्रनाडीरूपपूर्वारेऽक्षरसंस्कारः। ललनारूपोत्तरारेऽक्षरसंज्ञा इति षट्स्कन्धाः।

